and invasion of personal and property rights. As Āryas the Vaiśyas could not be enslaved, even in war. They were well organized, as were craftsmen also, in guilds, and were disciplined for common, concerted action. Each guild, and the community in each city, had its accredited leaders. Their opposition, or non-cooperation will paralyse even an unbelieving king, whereas the non-cooperation of the Brāhmana, who refuses to help him to placate the gods, will hardly move a ruler who is a sceptic.

The ministers had no constitutional right to implement their advice, against a king, who will not accept it. But, the risk that the king will run from a disgruntled council, is indicated in the weightage given to ministers in the *Rāja-maṇḍala*, in which, in Manu's classification they occupy sixty out of the seventy-two *prakṛti-sthānas*.

An effective brake on the king existed in his own slender resources. His prerogative rights were few and poor. Even the right of the king to treasure-trove was limited to a portion, if the finder was not a Brāhmaṇa. Rights to escheated property were also similarly circumscribed. A king may accept ceremonial presents, but not gifts coming under *dāna*. The description of Manu that "the king is lord of all" is complimentary exaggeration. His right to all the land in the kingdom is denied by *Mīmāmsā*.[1] He is entitled only to one-sixth of the produce from land, and to certain other *fixed* ratios of income and to customs, excise and state monopolies. Agriculture and trade languish under misgovernment, and if they dry up the main sources of the king's income go. As against this, his commitments in expenditure are many and heavy. If he attempts to increase his income by such fiscal exactions as those that S'ankaravarman of Kāsmīr practised (of which Kalhaṇa gives a vivid description) the resulting popular discontent will encourage a neighbour to invade his territory. An empty treasury, a sullen army, an angry priesthood and an enraged people form a combination which will spell ruin to a kingdom, in which these prevail, even on the first impact of invasion. The fear of such intervention must have been more effective in restraining the vagaries of an autocrat than

[1] *S'abara-bhāṣya*, VI, 7, 3, Colebrooke's *Miscellaneous Essays* (1871), I, pp. 320-321, *Ancient Indian Economic Thought*, pp 179-181

[2] *Rājataranginī*, V, 165-181.

any constitutional machinery, empowered to call his actions into question.

But, the best of all checks is to bring up a king in a manner that will make it unlikely that he will prove blind to the dictates of Dharma and to the promptings of self-interest, which is best safeguarded by scrupulous attention to the beliefs even more than to the real interests of the people. The traditions of conciliar government and of careful recruitment of the ministry and the official hierarchy will effect a great deal, especially when the king is habituated to such methods of administration. But even more effective will be his education in all branches of Dharma, viewed comprehensively as Rājadharma, and the provision of a digest in which Dharma will be expounded in a manner which will make it clear to the people no less than to the ruler, and in which emphasis will be laid just on those features which a king should not miss if he should rise to the level of the ideal ruler, whose every act will reflect the inspiration of the divinity immanent in kingship. This is the task which has been essayed by Lakṣmīdhara.

॥ श्रीः ॥

श्रीलक्ष्मीधरविरचितः

# कृत्यकल्पतरुः

## राजधर्मकाण्डम्

### मङ्गलाचरणम्

ॐ नमो विघ्नराजाय निर्विघ्नफलदायिने ।

न्याय्ये वर्त्मनि यज्जगद्गुणवतां गेहेषु यद्दन्तिनो
राज्ञां मूर्द्धनि यत्पदं व्यरचयद्गोविन्दचन्द्रो नृपः ।
तत्सर्वं खलु यस्य मन्त्रमहिमाश्चर्यं स लक्ष्मीधरः
काण्डे शंसति राजधर्मनिचयानेकादशो पुण्यधीः ॥

### प्रतिज्ञा ( विषयनिर्देशः )

राजप्रशंसा प्रथममभिषेको गुणास्ततः ।
अमात्या अथ दुर्गाणि वास्तुकर्मविधिस्ततः ॥
राष्ट्रसङ्ग्रहणं कोशो दण्डो मित्रं ततः पुनः ।
राजपुत्राभिरक्षा च मन्त्रः षाड्गुण्यमेव च ॥
यात्राभिषिक्तकृत्यानि देवयात्राविधिस्ततः ।
महोत्सवश्च कौमुद्या ध्वजोच्छ्रायविधिस्ततः ॥
महानवम्यां पूजा च विधिश्चिह्नस्य चाऽप्यथ ।
गवोत्सर्गो वसोर्धारा पर्वाण्येकादशो क्रमात्[1] ॥

1 I. O., एकादश क्रमात् is wrong as there are 21 Parvas.

१

# अथ राजप्रशंसा

तत्र मनुः[1]

राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा ॥
अराजके हि लोकेऽस्मिन् सर्वतोऽभिद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैवं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सोऽग्निर्भवतु वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥

नारदः[2]

पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥

1 VII, 1, 3-7; cited by वी. मि., p. 10. Compare राजधर्मकौस्तुभ, ch. 32 ( pp. 243-248 )

2 नार. स्मृ,. ( *ed.* Jolly ) p. 219 [ XVII, 26-31 ]

कारणान्निर्निमित्तं वा यदा क्रोधवशं गतः ।
प्रजा दहति भूपालस्तदाऽग्निरभिधीयते ॥
यदा तेजः समालम्बेद्विजिगीषुरुदायुधः ।
अभियाति परान्राजा तदेन्द्रः समुदाहृतः ॥
विगतक्रोधसन्तापो हृष्टरूपो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा ॥
धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः[1] ॥
यदा त्वर्थिगुरून् प्राज्ञान् भृत्यादीन् पृथिवीपतिः ।
अनुगृह्णाति दानेन तदा धनद उच्यते[2] ॥

मनुः[3]

इन्द्रस्याऽर्कस्य वातस्य यमस्य वरुणस्य च ।
सोमस्याऽग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ॥
वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति ।
तथाऽभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्[4] ॥
अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत् करं राष्ट्रात् सम्यगर्कव्रतं हि तत् ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥

1 Jolly, p. 219, reads वैवस्वतः स्मृतः

2 *Ibid*, तदा स धनदः स्मृतः

3 IX, 303–311; cited by वी. मि., p. 19.

4 S'loka omitted in Udaipur Ms.

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्यः सर्वस्तद्धि यमव्रतम् ॥
वरुणेन यथा पाशैर्बद्ध एव हि दृश्यते ।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन् स चन्द्रव्रतिको नृपः[1] ॥
प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥
यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥

नारदः[2]

अनादिश्चाऽप्यनन्तश्च द्विपदां पृथिवीपतिः[3] ।
दीप्तत्वाच्च शुचित्वाच्च यद्यसौ न पथश्च्युतः ॥
अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः ।
शुचिश्चैवाऽशुचिः सद्यः कथं राजा न दैवतम् ॥
तस्मात्तं नाऽवजानीयान्नाऽऽक्रोशेन्न[4] विशेषयेत् ।
आज्ञायां[5] तस्य तिष्ठेत्तु मृत्युः स्यात्तद्व्यतिक्रमात् ॥

1 वृत्तिको is the Udaipur Ms. reading.

2 XVII, 12 ; वी. मि., p. 21

3 Jolly reads ( p. 217 ):
अनिर्देश्यावनिन्द्यौ च राजा ब्राह्मण एव च ।
दीप्तिमत्वात् शुचित्वाच्च यदि न स्यात्पथश्च्युतः ॥

4 वी. मि., p. 22, नाक्रोशेन विशेषयेत्

5 वी. मि., p. 22, आज्ञया

आज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता ।
स यद्ब्रूयादसत्सद्वा स धर्मो व्यवहारिणाम् ॥

राजनामा चरत्येष भूमौ साक्षात्सहस्रदृक् ।
न तस्याऽऽज्ञामतिक्रम्य प्रतिष्ठेरन्निमाः प्रजाः ॥

रक्षाधिकारादीशत्वाद्भूतानुग्रहदर्शनात् ।
यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥

निर्गुणोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा ।
प्रजानां निर्गुणोऽप्येवं पूज्य एव नराधिपः ॥

राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते पथः प्रजाः ।
व्यवहारस्ततो ज्ञेयः शंसतो राज्यशासनम् ॥

स्थित्यर्थं पृथिवीपालैश्चारित्रविधयः कृताः ।
चरित्रेभ्योऽप्यतः प्राहुर्गरीयो राजशासनम् ॥

तपःक्रीताः प्रजा राज्ञः प्रभुरासां तथा नृपः ।
तस्मात्तद्वचसि स्थेयं वार्त्ता तासां तदाश्रया ॥

'चारित्रविधयः' राजकृता भागादिव्यवस्थाप्रकाराः । 'राजशासनं' राजाज्ञा । 'वार्त्ता' कृषिपशुपाल्यादिवृत्तिः[1] ।

मनुः[2]

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥

1 A. S. B., पाशुपाल्यादिवृत्तिः

2 VII, 8-13; cited वी. मि., p. 17

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥
कार्यं चाऽवेक्ष्य शक्तिं च देशकालौ च तत्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥
यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥
तं यस्तु द्वेष्टि सम्मोहात्स विनश्यत्यसंशयम् ।
तस्मात्त्वाशु[1] विनाशाय राजा प्रकुरुते मनः ॥
तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाऽप्यनिष्टेषु तं धर्मं न विचारयेत् ॥

दण्डानुवृत्तौ मनुः[2]

तं देशकालौ शक्तिं च विद्यां चाऽऽवेक्ष्य शक्तितः ।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाऽभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥

1 A. S. B., तस्य त्वाशु ; वी. मि., p. 23, तस्य ह्याशु which is a better reading.

2 VII, 16-19

राजेत्यनुवृत्तौ गौतमः[1]

तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः । तेऽप्येनं मन्येरन्[2] ।

बृहस्पतिः

बलेन चतुरङ्गेण यतो रञ्जयति प्रजाः ।
दीप्यमानः स वपुषा तेन राजाऽभिधीयते ॥

अङ्गिराः

गुरुवच्चेन भूपालः पापं दण्डेन भूयसा ।
संस्करोत्यवनाच्चैव तेनाऽसौ गुरुरुच्यते ॥

'पापं' पापकारिणम् । 'अवनात्' रक्षणात् ।

श्रीरामायणे[3]

नाऽराजके जनपदे योगः क्षेमं प्रवर्त्तते ।
न चाऽप्यराजके सेना शत्रून् विषहते परान् ॥
विपालाश्च यथा गावो यथा चाऽतृणकं वनम् ।

1 11, 7-8

2 'तमेवंगुणसम्पन्नं राजानं उपरि स्थितं नीचैः समीपतः सेवेरन् क्षत्रियादयः । अब्राह्मणा इति वक्तव्ये अन्ये ब्राह्मणेभ्य इति गुणवद्ब्राह्मणोपसङ्ग्रहणार्थं, न तु जातिमात्रस्येति । तमधस्तादासीरन्निति सिद्धे उपरिग्रहणमुत्सवादिष्वपि उपरिभावार्थम् । तेऽपि गुणवन्तो ब्राह्मणा अपि एनमधस्तात्स्थितं मन्येरन् पूजयेयुः आशीर्वादादिभिः लोकपालांश इति इति मत्वा' ॥ ( मस्करिभाष्य, p. 178 )

3 अयोध्याकाण्ड, sarga 67, sl. 24 ff.

अजलाश्च यथा नद्यस्तथा राष्ट्रमराजकम् ॥
अन्धं तम इवेदं स्यान्नेह ज्ञायेत किञ्चन ।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥

इति राजप्रशंसा ॥

# २

# अथाऽभिषेकः

तत्र ब्रह्मपुराणे[1]

सुतिथौ च सुनक्षत्रे स्नानं नक्षत्रनामकम्[2] ।
मुहूर्ते सुगुणोपेते सर्वोत्पातविवर्जिते ॥
स्थिरे राशौ शुभयुते केन्द्रे चोपचयान्विते ।
काश्मीरायान्तु[3] पार्वत्यां शङ्करात्मा महीपतिः ॥
सर्वलक्षणसंयुक्तस्त्वभिषेच्यो नवस्तदा ।
नगरं तत्र कर्तव्यं पताकाध्वजसङ्कुलम् ॥
नीरजस्कास्तथा कार्या राजमार्गाः शुभैर्जलैः ।
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलपाणिभिः ॥

1 Compare राजधर्मकौस्तुभ–ch. 46, which cites this passage from ब्रह्मपुराण ( not found in Ānandāśrama *ed.* ) as from कल्पतरु ( p. 326 )

2 वी. मि., p. 34 : 'सुतिथौ' चतुर्थीनवमीचतुर्दशीभिन्नतिथौ । 'सुनक्षत्रे' ध्रुवाणि वैष्णवं शाक्रं इत्यादिना विहितनक्षत्रे । 'नक्षत्रनामकं स्नानं' विधाय इति शेषः । 'मुहूर्ते सुगुणोपेत' इत्यनेन गुरुशुक्रास्तादिरहितशुद्धमासादिरूपः काल उपलक्ष्यते ।

3 A. S. B., कश्मीरायान्तु ; वी. मि., p. 35 comments : तदा पूर्वोक्तकाले नवो महीपतिः 'पार्वत्यां' पर्वतभवायां 'काश्मीरायां' श्रीपर्ण्यां तन्निर्मिते भद्रपीठे उपवेशयेत् इत्यर्थः । अत एव अग्रेऽभिषेकसम्भारमध्ये श्रीपर्णीपीठमाहृतमस्ति ।

गन्तव्यं [1]वारमुख्याभिस्तथा राजनिवेशनम् ।
पौरमुख्यैस्तथा [2]वाद्यैर्गुणमुख्यैस्तथैव च ॥
शोभनीयं च नगरं सविलासैश्च नर्तकैः ।
स्नानकाले च कर्तव्यो महाकोलाहलस्तथा ॥
वादित्रशङ्खपुण्याहैः सूतमागधवन्दिभिः ।
सामन्तैर्मन्त्रिभिर्भाव्यं छत्रचामरपाणिभिः ॥
आदौ कृत्वा महाशान्तिं पुण्यां वैनायिकीं शुभाम् ।
ग्रहशान्तिं तथा श्रेष्ठां तृतीयामाहुतिं तथा ॥
पुरोधाः सोपवासश्च श्रुतिस्मृतिसमन्वितः ।
त्रयोदश महामन्त्रान् तर्प्पयेज्जातवेदसि ॥
गणं चैवाऽप्रतिरथं सत्यधर्मगणौ तथा ।
आयुष्यमभयं चैव तथा स्वस्त्ययनं परम् ॥
वैष्णवानथ मन्त्रांश्च तथा पौरन्दरानपि ।
सावित्रब्राह्मरौद्रांश्च वारुणानथ सर्वदा ॥

"ऋताषाडि"ति त्रयोदश महामन्त्राः। 'गणः'[3] "ईहग-न्या गृहे"त्यादयः । 'अप्रतिरथः' "आशुः शिशान" इति । 'सत्यगणः' "आगात्सत्य"मिति । 'धर्मगणः' "यास्ते अग्ने घोरास्तनुव"इति । 'अभयस्वस्त्ययने' "यत इन्द्र" "स्वस्तिदा"इति ।

1 A. S. B., वरमुख्याभिः

2 वी. मि., p. 43, वाद्यैः

3 वी. मि., p. 44, गणः इदगत्यामहेत्यादयः

तथा[1]

राजा स्नातः पुनः स्नाप्यः पञ्चगव्येन देववत्[2] ।
मृत्ताम्ररौप्यहेमोत्थैः जलपूर्णैस्ततो घटैः ॥
तोयेन शूद्रैः[3] स्नाप्यश्च पश्चिमां दिशमाश्रितैः ।
ततः क्षीरेण वैश्यैश्च दक्षिणस्यां दिशि स्थितैः ॥
क्षत्रियैश्च ततो दध्ना पूर्वस्यां दिश्यवस्थितैः ।
अमृतेन ततो विप्रैः घृतेनोत्तरतः स्थितैः ॥
पर्वतोत्थमृदा पश्चाद्राज्ञः शोध्यं शिरो द्विजैः ।
वल्मीकमृदया कर्णौ शोधितव्यौ प्रयत्नतः ॥
शक्रस्थानाच्च मृदया ग्रीवा शोध्या च भूभृतः ।
राजवेश्मगृहद्वारमृदया[4] हृदयं तथा ॥
देवालयमृदा पृष्ठं शोध्यं तस्याऽथ राजभिः ।
गजदन्तोद्धृतमृदा दक्षिणस्तु तथा भुजः ॥
शोधनीया शनैर्नासा वृषभशृङ्गलग्नया[5] ।
कटिदेशस्ततो वैश्यैः वेश्याद्वारमृदा तथा ॥
नदीकूलमृदा पार्श्वे शोधितव्ये यथाक्रमम् ।
अश्वशालामृदा शूद्रैः शोध्ये तस्याऽथ जानुनी ॥

1 cf. राजधर्मकौस्तुभ–pp. 328–330, where the passage is reproduced.

2 So वी. मि., p. 44 ; but A. S. B. and I. O. read वेदवत्

3 Udaipur Ms. reads शुद्धैः ; the other reading is followed by वी. मि.

4 Udaipur Ms., गजवेश्यागृहद्वार

5 वी. मि., p. 44, वृषश्रृङ्गविलग्नया

गोकुलान्मृदया जङ्घे पादौ च सरसो मृदा।
सर्वौषधैः सर्वबीजैः गन्धै रत्नैश्च[1] सर्व्वदा॥
सर्वपुष्पैः सर्वफलैः स्नाप्यो रोचनया तथा।
अथ भद्रासनगतः सर्वतोयैः सुभास्वरैः[2]॥
यथाशक्त्या समानीतैः पुरस्कृत्य पुरोहितम्।
नृपतिस्त्वभिषेक्तव्यो दैवज्ञवचनान्नरैः॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रमुख्यैस्तथैव च।
पतिव्रताभिर्नारीभिः पुत्रिणीभिश्च पुत्रवत्॥
ततः स्नातो विलिप्ताङ्गः कृतदेवाग्नितर्पणः।
आबद्धमुकुटः स्रग्वी बद्धपट्टो विभूषितः॥
मङ्गलानां शतं पश्येत्पुण्यमष्टोत्तरं शतम्।
शान्त्यै प्राधानिके स्थाने सर्वमेतद्यथाक्रमम्॥
कृत्वा शेषं ततो हुत्वा दद्यात्पूर्णाहुतिं ततः।
अभिषिक्तस्ततो राजा सम्पूज्याऽऽदौ विनायकम्॥
ततः क्रमेण देवांश्च ब्रह्मविष्णुमहेश्वरान्।
ग्रहान्नीलं च नागेन्द्रमग्निं विप्रान् पुरोहितम्॥
देवान् पितॄन् समुद्दिश्य दद्याद्विप्रेषु दक्षिणाम्।
अभयं सर्वभूतेभ्यः सम्यक् तत्र ददाति च॥
अथाऽतस्स्थानगान्सर्वान् पशूनपि विमोचयेत्।
बन्धनस्थानसंस्थांश्च प्रमोचयति शाश्वत्॥
गोब्राह्मणादिहन्तॄंश्च [3]कण्टकान् दारुणानपि।

1 वी. मि., p. 45, गन्धैरत्नैः (?)

2 वी. मि., p 45, शुभांबरैः (?)

3 वी. मि., p. 45, पापिष्ठान् for कण्टकान्

जहाति हस्तिहन्तॄंश्च क्रूरांश्चाऽपि सुशिक्षितान् ॥
व्याघ्रचर्मोत्तरे रम्ये तथा सिंहासने शुभे ।
उपवेश्यो भवेद्राजा स्वयमेव पुरोधसा ॥
सिंहासनस्थः सम्पश्येत्प्रकृतीश्च समागताः ।
छत्रायुधानि सम्पूज्य गणमुख्यांस्तुरङ्गमान् ॥
आरुह्याऽलङ्कृतं नागं विसृजन् धनसञ्चयम् ।
प्रदक्षिणीकृत्य पुरं प्रविश्य च पुनर्गृहम् ॥
सभास्थान् पैारमुख्यांश्च कृत्वा पूजां विसर्जयेत् ।
गतेषु तेषु च धनैस्तर्पयेन्नटनर्तकान् ॥
ब्राह्मणान् भोजयेत्सर्वान् दीनानाथांश्च बान्धवान् ।
ततो महाजनैः सार्द्धं पूर्वराजक्रमादिभिः ॥
आहारं कुरुते राजा राजभृत्यान् विभज्य च[1] ।
आचम्य ताम्बूलमुखो विहरेत ततः क्षणम् ॥
ततः कतिपयैः सार्द्धं अन्तःपुरनिवासिभिः ।
रक्षेत्प्रयत्नादात्मानं[2] भूयो भुङ्क्ते यथासुखम् ॥
अनेनैव विधानेन कुर्याद्वर्धापनं सदा ।
अभिषेकाद्धि यत्नेन प्रतिसंवत्सरं नृपः ॥

श्रीरामायणे[3]

शनैस्तस्मिन् प्रशान्ते तु जनघोषे नराधिपः ।

1 I. O., वा for च ; वी. मि., p. 46, विसृज्य for विभज्य

2 वी. मि., p. 46, रक्षेत् सपत्नात्

3 अयोध्याकाण्डं, sarga 3, sl. 5 ff ; cf. वी. मि., p. 46

प्रणम्य गुरुमासीनमित्युवाच पुरोहितम् ॥
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदस्य भगवन् सर्वमाज्ञापयितुमर्हसि ॥
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ।
आदिदेशाऽग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥

'युक्तान्' नियोगिपुरुषान्[1] ।

सुवर्णादीनि रत्नानि मणीन् सर्वौषधीरपि ।
शुक्लं च माल्यं लाजांश्च पृथक् च मधुसर्पिषी ॥
अहतानि च वासांसि रथं सर्वायुधानि च ।
सितवर्णं च तुरगं गजं च शुभलक्षणम् ॥
चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ।
शतं च शातकौम्भानां कुम्भानामग्निवर्चसाम् ॥
हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म च ।
यच्चाऽन्यत्किञ्चिदेष्टव्यं यच्च किञ्चिन्मनोनुगम् ॥
उपस्थापयत प्रातरग्न्यगारे महीपतेः ।
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ॥
चन्दनैः स्रग्भिरर्च्यन्तां सुमनोदामभिस्तथा ।
प्रशस्तवस्तुगुणवद्दधिक्षीरोपसेचनम्[2] ॥
द्विजानां शतसाहस्रं सत्प्रकारफलं लभेत् ।

1 Repeated by वी. मि., p. 46 and राजधर्मकौस्तुभ., p. 330
2 I. O., सेवनम् for सेचनम्

सिद्धमन्त्राद्यसम्भारः[1] प्रत्यूषस्येव कल्प्यताम्[2] ॥
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥
आज्ञाप्यन्तां[3] पताकाश्च राजमार्गश्च सिच्यताम् ।
सर्वे च नागराश्चैव गणिकाश्च स्वलङ्कृताः ॥
कक्ष्यां[4] द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनि ।

'कक्ष्यां' प्रकोष्टम्[5] ।

देवायतनचैत्येषु [6]नानाभक्ष्याः सदक्षिणाः ।
उपस्थापयितव्याश्च माल्ययोगाः पृथक् पृथक् ॥
बद्धदीर्घासयो योधाः सन्नद्धा मृष्टवाससः ।
महाराजस्य भवनं प्रविशन्तु महोदयम् ॥
एवमाज्ञाप्य तत्सर्वं कृतमित्यभ्यवेदयत्[7] ।
सुप्रीतमनसे राज्ञे वसिष्ठो हर्षयन् पुनः ॥

तथा

आभिषेचनिकं द्रव्यं सर्वमेवोपकल्पितम् ।

1 I. O., मन्त्राऽथ

2 This line is not found in *Rāmāyaṇa* ( Mylapore *edn.* ) but this śloka occurs :

सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
घृतं दधि च लाजाश्च दक्षिणाश्चाऽपि पुष्कलाः ॥

3 *Rāmāyaṇa* reads आपद्यन्तां

4 राज. कौ., p. 331, 'कक्ष्यां' प्रकोष्ठाम्

5 Reproduced by वी. मि., p. 47 and राज. कौस्तु., p. 232

6 *Ibid*, सान्नभक्ष्याः; वी. मि., p. 47, जलभक्ष्याः

7 Missing in printed *Rāmāyaṇa* ( Mylapore *edn.* )

गङ्गायमुनयोश्चैव सङ्गमादाहृतं जलम् ॥
याश्चाऽन्याः सरितः पुण्यास्ताभ्यश्च जलमाहृतम् ।
सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ॥
वाहनं नरसंयुक्तं दर्भाः सुमनसः पयः ।
अहतानि च वासांसि भृङ्गारं च हिरण्मयम् ॥
क्षीरवृक्षप्रवालैश्च पश्चात्फलविमिश्रितैः ।
पूर्णकुम्भाः स्वलङ्कृत्य काञ्चना उपकल्पिताः ॥
रसो गोरोचना चैव लाजा दधि घृतं मधु ।
तथैव पुण्यतीर्थेभ्यो मृदापो जङ्गमानि च[1]॥
चन्द्रांशुविमले चारुमणिदण्डे स्वलङ्कृते ।
चामरव्यजने श्रीमद्रामार्थमुपकल्पिते ॥
पूर्णेन्दुमण्डलाभं च श्रीमन्माल्यविभूषितम् ।
रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितम् ॥
मत्तो गजवरश्चैव औपवाह्यः प्रतीक्षते ॥

'औपवाह्यः' राजवाह्यः[2] ।

श्वेतश्च तुरगः श्रेष्ठो रामार्थमुपकल्पितः ।
अष्टौ कन्याश्च मङ्गल्याः सर्वाभरणभूषिताः ॥
रूपयौवनसम्पन्ना गणिकाश्च स्वलङ्कृताः ।
श्वेतपुष्पाणि धेनुश्च निस्त्रिंशो धनुरेव च ॥
हेमदाम्ना स्वलङ्कृत्य ककुद्मान् पाण्डुरो वृषः ।

1 'जङ्गमानि' पुण्यपक्षिणः, राज. कौ., p. 332

2 वी. मि., p. 48 ; and राज. कौ., p. 332

सिंहासनं व्याघ्रचर्म समिद्धश्च हुताशनः ॥
वादित्राणि च सर्वाणि सूतमागधवन्दिनः ।
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ॥
पौरजानपदाः श्रेणी नैगमानां गणैः सह ।
एते चाऽन्ये च बहवः प्रीयमाणाः प्रियंवदाः ॥

तथा रामं प्रति दशरथवाक्यम्

आदिष्टो ह्यसि मे ज्येष्ठ प्रसूतः सदृशो गुणैः ।
ज्येष्ठायामपि मे पत्न्यां सदृश्यां सदृशः सुतः ॥
उत्पन्नः स्वैर्गुणैर्ज्येष्ठो रामो नामाऽऽत्मजः प्रियः ।
त्वया तात प्रजा ह्येताः स्वगुणैरनुरञ्जिताः ॥
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्स्यसि ॥

तथा

गते पुरोहिते रामस्ततो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥
प्रगृह्य शिरसा पात्रं हविष्यं विधिवत्ततः ।
महते दैवतायाऽऽज्यं जुहाव ज्वलितेऽनले ॥
शेषं च हविषस्तस्य प्राश्याऽऽशास्याऽऽत्मनिश्चयम् ।
ध्यायन्नारायणं देवं स्थण्डिले कुशसंस्तरे ॥
वाग्यतः सह वैदेह्या भूत्वा च नियतात्मवान् ।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥
कृतोपवासं रामं तु वैदेह्या सहितं तदा ।
सदर्भायां क्षितौ सुप्तं शुश्राव विधिवज्जनः ॥

इत्यभिषेकविधिः ॥

# ३

# अथ राजगुणाः

तत्र शङ्खलिखितौ

राजा दीर्घदर्शी महोत्साहः शक्तिमाननसूयुर्भक्तवत्सलः। त्यागी शरण्यः सर्वभूतानां संविभक्ता सत्यवाक् अमत्सरी गम्भीरोऽमर्षणो बुधस्तेजस्वी प्रतिविधानकुशल अदीर्घसूत्रो दक्षः क्षमावान् लक्ष्यज्ञो देशकालद्रव्यप्रयोगसङ्ग्रहनिमित्तज्ञानकुशलो गूढमन्त्रप्रचारः संवृतरन्ध्रः पररन्ध्रज्ञो दृढप्रहारी लघुहस्तो जितस्थानासनहिमातपो जितरागद्वेषलोभमत्सरः प्रजाभिरामो दीनानुग्रहकर्ता ब्राह्मणेष्वन्नप्रदाता श्रीयशोर्थी।

'दीर्घदर्शी' अनागतकार्यतत्वज्ञः। 'गम्भीरः' अनुपलक्षितक्रोधहर्षाद्याकारः। 'अमर्षणः' परसमृद्धेरसोढा। 'अदीर्घसूत्रः' अचिरक्रियः। 'गूढमन्त्रप्रचारः' फलानुमितमन्त्रतत्वज्ञः। 'सम्वृतरन्ध्रः' रन्ध्रे यत्र परे प्रहरन्ति तदावृतं यस्य। 'प्रजाभिरामः' प्रजानामभिरमयिता।

गौतमः

राजा[1] सर्वस्येष्टे ब्राह्मणवर्जम्। साधुकारी स्यात्साधु-

1 11, 1–6; 'सर्वस्य' विषयवासिनो जनस्य, निग्रहानुग्रहाचारभोगनियोगेषु प्रभुः, निग्रहे अपराधिनां, अनुग्रहेऽनुग्राह्याणां, आचारे मर्यादावस्थाने,

वादी त्रय्यामान्वीक्षिक्यादिकायां चाऽभिविनीतः शुचिर्जितेन्द्रियो गुणवत्सहायोपायसम्पन्नः समः प्रजासु स्यात् । हितं चाऽऽसां प्रकुर्वीत ।

'ईष्टे' अधिपतिर्भवति । 'आन्वीक्षिकी' न्यायविद्या ।

याज्ञवल्क्यः[1]

महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्वसम्पन्नः कुलीनः सत्यवाक्छुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥

'महोत्साहः' महोद्यमः । 'स्थूललक्ष्यः' बहुव्ययः[2] ।

भोगे करग्रहणे, नियोगे पुरुषाणां शिष्टकरणे । अस्याऽपवादः—'ब्राह्मणवर्जं' ब्राह्मणान् मुक्त्वा इत्यर्थः । अपचारेऽपि सतः सान्त्वपूर्वं एनान् स्वधर्मे स्थापयेत् , न तु इतरवर्णवत् निग्रहेण । ईशत्वेऽपि सति, 'साधुकारी' शास्त्राभिहिताविरुद्धाचरणशीलः । 'साधुवादी' व्यवहारदर्शनकाले पक्षानाश्रितवादी । यद्यप्यस्य सर्वेशत्वमुक्तम्, तथाऽपि शास्त्रोक्तमर्यादां च न लङ्घयेत् । 'आन्वीक्षिकी' न्यायविद्या आत्मविद्या वा । 'अभिविनीतः' कुशलः । विसमासाद्दण्डनीत्यां च, 'च' शब्दाद्वार्तायां च । 'शुचिः' अलुब्धः । 'गुणवत्सहायः' गुणवद्भिः विद्याचारित्रादिभिः गुणैर्युक्तैः सहायैः मन्त्रिसामन्तदूतादिभिरुपेतः । 'समो' व्यवहारे । 'हितं चासां' तटाकखननसेतुबन्धनारामादीन् कुर्यात् । 'च' शब्दात् द्यूतमद्यादीनि अहितानि निवर्तयेत् । ( मस्करिभाष्य, pp 177–178 )

1 या. स्मृ., I, 309–311

2 वी.मि., p.119 , repeating मिताक्षरा explains : 'स्थूललक्ष्यः'

कात्यायनः[1]

विनीतः शास्त्रसम्पन्नः कोशशौर्यसमन्वितः ।
ब्रह्मण्यो दानशीलः स्यात्सत्यधर्मपरो नृपः ॥
स्तम्भोपतापपैशुन्यचापलक्रोधवर्जितः ।
प्रगल्भः सन्नतोदग्रः सम्भाषी प्रियदर्शनः ॥
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

'स्तम्भः' पराऽप्रणतिः । 'उपतापो'ऽत्र प्रजापीडनम् । 'पैशुन्यं' परदोषाविष्करणम् । 'प्रगल्भः' अपरिषद्भीरुः[2] ।

विष्णुः[3]

प्रजासुखैः[4] सुखी राजा तद्दुःखैर्यश्च दुःखितः ।

बहुदेयार्थदर्शी । 'वदान्यः स्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । 'अक्षुद्रो'ऽसद्गुणद्वेषी । 'अपरुषः' परदोषकीर्तनः । 'रहस्यवित्' गोपनीयार्थगोपनचतुरः । 'विनीतः' तत्तदभिज्ञैः प्रावीण्यं नतिः । ( मिताक्षरा ) Aparārka explains 'अपरुषः' as अकठोरवाक्, and concludes : त्रयीग्रहणात् व्याकरणाद्यङ्गानि मीमांसापुराणधर्मशास्त्राणि गृह्यन्ते ।

1 Sl. 1–3 [ *ed.* Kane ] ; वी. मि., p. 120

2 वी. मि., p. 121 reproduces these comments, and adds : 'सन्नतोदग्रः' सत्सु नतः असत्सु अधृष्यः । 'सम्भाषी' स्मितपूर्वाभिभाषी ।

3 3, 88 [ *ed.* Jolly ] ; वी. मि., p. 121, विष्णुरपि राजेत्यनुवृत्तौ—
स्मितपूर्वाभिभाषी स्यात् वध्येष्वपि न भ्रुकुटिमाचरेत् इति ।

4 Jolly, p. 16, reads प्रजासुखे सुखी राजा

स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥

याज्ञवल्क्यः[1]

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मी क्रोधितोऽरिषु[2] ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥

मनुः[3]

स्वराष्ट्रे न्यायवृत्तिः[4] स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
एवं वृत्तस्य नृपतेः शिलोञ्छेनाऽपि जीवतः ।
विस्तार्यते यशो लोके तैलबिन्दुरिवाऽम्भसि ॥

कात्यायनः[5]

आत्मीये संस्थिता धर्मे नृपाः शक्रत्वमाप्नुयुः ।
अवीचिवासिनो ये तु व्यपेताचारिणः सदा ॥
गच्छेत् सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पार्द्धं तु न संशयः ॥
सुराध्यक्षश्च्युतः स्वर्गान्नृपरूपेण तिष्ठति ।
कर्तव्यं तेन तन्नित्यं येन तत्वं समाप्नुयात् ॥
'व्यपेताचारिणः' अपभ्रष्टाचाराः । 'तत्वं' सुरेशत्वम् ।

इति राजगुणाः ॥

1 I, 334 ; वी. मि., p. 121
2 अपरार्क and मिताक्षरा follow the reading क्रोधनोऽरिषु
3 VII, 32–33 ; वी. मि., p. 121
4 Printed text reads न्यायवृत्तः
5 Sl. 9, 10, 8, ( Kane ) ; वी. मि., p. 139

# ४

# अथाऽमात्याः

तत्र नराधिप इत्यनुवृत्तौ याज्ञवल्क्यः[1]

सन्मन्त्रिणः[2] प्रकुर्वीत प्राज्ञान् मौलान् स्थिरान् शुचीन्।
तैस्सार्द्धं चिन्तयेद्राज्यं विप्रेणाऽथ ततः स्वयम् ॥

'मौलान्' पितृपैतामहान्। 'शुचीन्' उपधाशुद्धान्[3]।

मनुः[4]

मौलान् शास्त्रविदः शूराँल्लब्धलक्ष्यान् कुलोद्गतान्।
सचिवान् सप्त चाऽष्टौ वा प्रकुर्वीत परीक्षितान् ॥

1 I, 312; वी॰ मि., p. 177

2 वी. मि., p. 177 gives the reading स मन्त्रिणः but refers to the text reading thus: कल्पतरुणा नराधिप इत्यनुवृत्तौ 'सन्मन्त्रिणः' इति पाठो लिखितः। मिताक्षरा adopts the reading स मन्त्रिणः

3 cf मिताक्षरा–'मौलान्' स्ववंशपरम्परायातान्। 'शुचीन्' धर्मार्थकामभयोपधाशुद्धान्। एवं मन्त्रिणः कृत्वा तैः सार्धं राज्यं सन्धिविग्रहिकादिलक्षणं कार्यं चिन्तयेत् समस्तैः व्यस्तैश्च। अनन्तरं तेषामभिप्रायं ज्ञात्वा सकलशास्त्रार्थविचारकुशलेन 'ब्राह्मणेन' पुरोहितेन सह कार्यं विचिन्त्य ततः स्वय बुद्ध्या कार्यं चिन्तयेत्।

4 VII, 54-59; वी. मि., p. 177

'लब्धलक्ष्यान्' परिदृष्टकर्म्मणः'[1] ।

अपि यत् सुकरं कर्म तदप्येकेन दुष्करम् ।
विशेषतोऽसहायेन किमु राज्यं महोदयम् ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मने ॥
सर्वेषां तु विशेषेण[2] ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य ततः कार्यं समाचरेत् ॥

मत्स्यपुराणे[3]

तस्मात् सहायान् वरयेत् कुलीनान्नृपतिस्स्वयम् ।
शूरान् कुलीनजातीयान् बलयुक्तान् श्रियाऽन्वितान् ॥
रूपसत्वगुणोपेतान् सज्जनान्[4] क्षमयाऽन्वितान् ।
क्लेशक्षमान्महोत्साहान् धर्मज्ञांश्च प्रियंवदान् ॥
हितोपदेशकान् राज्ञः[5] स्वामिभक्तान् सुवत्सलान्[6] ।
एवंविधान् सहायांस्तु शुभकर्मसु योजयेत् ॥

1 cf. वी. मि., p. 177

2 वी. मि.,p. 178 reads विशिष्टेन for विशेषेण

3 वी. मि., p. 184 ; म. पु. ( Ānandāśrama *ed.* ) c.215 ś. 3-6

4 *Ibid*, p. 175 संयतान् for सज्जनान्

5 म. पु. , c. 215 , 6 : हितोपदेशकालज्ञान्

6 *Ibid*, श्रियान्वितान् for सुवत्सलान्

राजगुणानुवृत्तौ कात्यायनः[1]

एतैरेव गुणैर्युक्तं अमात्यं कार्यचिन्तकम् ।
ब्राह्मणं तु प्रकुर्वीत नृपभक्तं कुलोद्गतम् ॥

मन्त्रिणो यत्र सभ्याश्च वैद्याश्च प्रियवादिनः ।
राज्याद्धर्मात्सुखात्तत्र क्षिप्रं हीयेत पार्थिवः ॥

न तस्य वचने कोपमेतेषां तु प्रवर्तयेत् ।
यस्मादेतैः सदा वाच्यं न्याय्यं सुपरिनिष्ठितम् ॥

'मन्त्रिणो' राजकृत्येषु । 'सभ्याः' प्रायश्चित्तादौ । 'वैद्याः'चिकित्सायाम् ।

महाभारते[2]

भृत्या ये तत्र योग्याः स्युः सम्यक् स्थाप्याः परीक्षिताः।
नाऽपरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ॥

तथा[3]

न बालिशा न च क्षुद्राः नाऽप्राज्ञा नाऽजितेन्द्रियाः ।
नाऽकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥

साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥

परीक्षेत प्रत्यहं भृत्यानाप्तैश्चारैर्नराधिपः ।
समानशीलैर्विस्रब्धैः विवृणोति मनोगतम् ॥

1 Kane, 11–13 ; वी. मि., p. 178

2 वी. मि., p. 175

3 वी. मि., p. 175 ascribes these verses to विष्णुधर्मोत्तर

मत्स्यपुराणे[1]

कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः ।
हस्तिशिक्षादिशिक्षासु[2] कुशलः श्लक्ष्णभाषिता ॥
निमित्ते शाकुनज्ञाने वेत्ता चैव चिकित्सिते ।
कृतज्ञः कर्मणां शूरस्तथा क्लेशसहो ऋजुः ॥
व्यूहतन्त्रविधानज्ञः फल्गुसारविशेषवित् ।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथवा ॥

'व्यूहतन्त्रविधानज्ञः' [3]चक्रदण्डाद्याकारसैन्यसन्निवेशो व्यूहः । तस्य 'तन्त्रं' शास्त्रं, तेन व्यूहप्रकारं यो जानाति ।

प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राही च सर्वेषां प्रतीहारी विधीयते ॥
यथोक्तवादी दूतस्स्याद्देशभाषाविशारदः ।
सूक्तः[4] क्लेशसहो वाग्मी देशकालविभागवित् ॥
विज्ञाय देशं कालं च कृतं यत् स्यान्महीक्षितः[5] ।
वक्ताऽपि तस्य यः काले[6] स दूतो नृपतेर्भवेत् ॥

1 वी. मि., p. 179; म. पु., c. 215, sl. 8–47

2 म. पु., I. O. and A. S. B., हस्तिशिक्षाश्वशिक्षासु ; Udaipur Ms., श्लक्ष्णभाषितः

3 वी. मि., 179 has चक्रदण्डगरुडाद्याकारः in par reproducing this comment.

4 म. पु., c. 215, sl. 12, शक्तः for सूक्तः

5 *Ibid*, विज्ञातदेशकालश्च दूतो यः स्यान्महीक्षितः ।

6 *Ibid*, वक्ता नयस्य यः काले

प्रांशवो व्यायताः[1] शूरा दृढभक्ता निराकुलाः ।
राज्ञा तु रक्षिणः कार्याः सदा क्लेशसहा हिताः ॥
अनाहार्योऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाऽप्यथ तद्गुणा ॥

'अनाहार्यः' परैरभेद्यः[2] ।

षाड्गुण्यविधितत्वज्ञो देशकालविशारदः ।
सान्धिविग्रहिकः कार्यो राज्ञा नयविशारदः ॥

'षड्गुणाः'सन्धिविग्रहयानासनद्वैधीभावसंश्रयाः,तेषां विधेः प्रकारस्य वेत्ता[3] ।

आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः ।
कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादक्षरक्षिता ॥

'अक्षरक्षिता' अक्षपरिपालकः[4] ।

सुरूपस्तरुणः प्रांशुर्दृढभक्तिः कुलोचितः ।
शूरः क्लेशसहश्चैव खड्गधारी प्रकीर्तितः ॥
शूरश्च बलयुक्तश्च गजाश्वरथकोविदः ।
धनुर्द्धारी भवेद्राज्ञः सर्वक्लेशसहः शुचिः ॥
निमित्तशकुनज्ञान(नी) हयशिक्षाविशारदः ।

1 म. पु., प्रांशवोऽशयनाः
2 वी. मि., p. 181 : 'अनाहार्यः' द्रव्यादिदानद्वारा परैः अभेद्यः
3 Reproduced with slight changes by वी. मि., p. 181
4 *Ibid*, म. पु., c. 215, sl. 17 reads देशरक्षिता

हयायुर्वेदतत्त्वज्ञो भूमिभागविशेषवित्[1] ॥

बलाबलज्ञो रथिनः स्थिरदृष्टिः प्रियंवदः।
शूरश्च कृतविद्यश्च सारथिः परिकीर्तितः ॥

अनाहार्यः शुचिर्दक्षश्चिकित्सितविदांवरः।
सूपशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते ॥

सूदशास्त्रविधानज्ञाः पराभेद्याः कुलोद्गताः।
सर्वे महानसे धार्या नीचकेशनखा नराः[2] ॥

समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः।
विप्रमुख्यः कुलीनश्च धर्माधिकरणो[3] भवेत् ॥
कार्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः।
सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः ॥
लेखकः कथितो राज्ञः सर्वाधिकरणो बुधैः[4]।
शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान् शुभान्[5] ॥
अक्षरान् वै लिखेद्यस्तु लेखकः स वरः स्मृतः।
उपायवाक्यकुशलः सर्वशास्त्रविशारदः ॥
बह्वर्थवक्ता चाऽल्पेन लेखकः स्यान्नृपोत्तम।
'[उपायाः' सामदानभेददण्डाः। तेषु वाक्ये च निपुणः।

वाक्याभिप्रायतत्त्वज्ञो देशकालविभागवित्।

1 म. पु., c. 215, sl. 20, भुवो भागविचक्षणः

2 म. पु., 215, 23, कृत्तकेशनखा नराः

3 A. S. B. and I. O., करणी; वी. मि., p. 182 and म. पु., adopt the text reading.

4 वी. मि., p. 182 and म. पु., 215, 26 : करणेषु वै

5 म. पु., 215, 26, समान् for शुभान्

अनाहार्यो नृपे भक्ते लेखकः स्यान्नृपोत्तम[1] ॥ ]

पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाऽप्यलोलुपाः ।
धर्माधिकरणैः कार्या जनाह्वानकरा नराः[2] ॥

एवं विधास्तथा कार्या राज्ञा दौवारिका जनाः ।
लोहवस्त्राजिनादीनां रत्नानां च विधानवित् ॥

विज्ञाता फल्गुसाराणामनाहार्यः शुचिः सदा ।
[ निपुणश्चाऽप्रमत्तश्च धनाध्यक्षः प्रकीर्तितः ॥

आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्तव्या पृथिवीक्षिता ॥

परम्परागतो यः स्यादष्टाङ्गे तु चिकित्सिते ।
अनाहार्यः स वैद्यः स्याद्धर्मात्मा च कुलोद्गतः ॥

प्राणाचार्यः ][3] स विज्ञेयो वचनं तस्य भूभुजा ।
राजन् राज्ञा सदा कार्यं यथा कार्यं पृथग्जनैः ॥

हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥

एतैरेव गुणैर्युक्तः स्वासनश्च विशेषतः[4] ।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते ॥

'स्वासनो' दृढासनः[5] ।

1 [ ] म. पु., A. S. B. and I. O.

2 म पु., 215, 30, धर्माधिकारिणः कार्या जना दानकरा नराः

3 [ ] Lines within asterisks missing in I. O.

4 म. पु., स्थविरश्च for स्वासनश्च

5 I. O. and A. S. B.; वी. मि., p. 184 further explains : दुष्टगजेनाऽपि चालयितुं अशक्यं आसनं उपवेशनं यस्य सः ।

हयशिक्षाविधानज्ञश्चिकित्सितविशारदः ।
अश्वाध्यक्षो महीभर्तुः स्वासनश्च प्रशस्यते ॥

अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ।
दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु ॥

वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः[1] ।
दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्तितः ॥

यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते ।
अस्त्राचार्यो निरुद्वेगः कुशलश्च विशिष्यते ॥

'यन्त्रमुक्ते' शरादौ । 'पाणिमुक्ते' शक्त्यादौ । 'अमुक्ते' खड्गादौ । 'मुक्तधारिते' यष्ट्यादौ[2] ।

वृद्धः कुलोद्गतः सूक्तः पितृपैतामहः शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥

पञ्चाशाब्दाधिका योषाः पुरुषाः सप्ततेः परे ।
अन्तःपुरचराः कार्या राज्ञा सर्वेषु कर्मसु[3] ॥

स्थापनाजातितत्वज्ञः सततं प्रतिजाग्रतः ।
राज्ञः स्यादायुधागारे दक्षः कर्मसु चोद्यतः ॥

'स्थापना' आयुधयन्त्राणामुचितदेशनिवेशः । 'जातयः' आयुधादीनामवान्तरभेदाः[4] ।

1 I. O., A. S. B. and वी. मि., p. 184

2 I. O. and A. S. B.; Reproduced by वी. मि., p. 184

3 म. पु., c. 215, 43–एवं सप्ताधिकारेषु पुरुषाः सप्त ते पुरे ।
परीक्ष्य चाधिकार्या स्यू राज्ञा सर्वेषु कर्मसु ॥

4 Reproduced by वी. मि., p. 185

कर्माण्यपरिमेयानि राज्ञो नृपकुलोद्वह ।
उत्तमाधममध्यानि बुध्वा कर्माणि पार्थिवः ॥
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ।
नरकर्मविपर्यासाद्राजा नाशमवाप्नुयात् ॥

'नरकर्मविपर्यासादि'ति उत्तमे कर्मण्यधमं मध्यमे कर्मण्युत्तमं नियोजयन्नश्यति'[1] ।

नियोगं पौरुषं भक्तिं श्रुतं शौर्यं कुलं नयम् ।
ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणां महीक्षिता ॥

शङ्खलिखितौ[2]

न गृध्नुपरिवारः स्यात्कामं गृध्नू राजा श्रेयान्न सपरिवारः परिवाराद्धि दोषाः प्रादुर्भवन्ति तेऽलं विनाशाय तस्मात्पूर्वमेव तत्परिवारं लिप्सेत ।

श्रुतशीलोपपन्नान् मन्त्रिणोऽभिधाय मनुः[3]

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
आप्तानर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ॥
निवर्त्तेताऽस्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽतन्द्रितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥

शङ्खलिखितौ[4]

सर्वेषां राजकुलरक्षणं, कोशपरिपालनं, गोब्राह्मणपरि-

1 Reproduced by वी. मि., p. 185

2 वी. मि., p. 185

3 *Ibid*; म. स्मृ., VII, 60-61.

4 वी. मि., p. 185

न्त्राणं, साम्परायिकं, क्रियासाधारणत्वादनुजीविनां विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्पास्तत्प्रयोजनत्वात्प्रत्यक्षा परोक्षा वृत्तिस्तस्य राज्ञो भवेदेकान्ततो हि दोषः, तस्माद्भृत्यपक्षाः क्रोधलोभमानभयदोषोपहताः संलपिता विमानिताभ्याख्याता दानमानस्थानव्यवरोपिता हृतसर्वस्वाः[1] स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्याः। धर्मार्थहितेष्वेतेषां यतेत स्वविषयाश्रावः परविषयभेदः सामादिभिरुपायैः मन्त्रज्ञेषु मन्त्रकर्मकरेषु दण्डकर्मवीराः महत्स्वात्मनि च धर्मनित्याः, सङ्ग्रहेष्वलुब्धाः, प्रत्यन्तेषु मौलाः, शुचयोऽर्थकृत्येषु अन्येषु यथानुरूपं नियोज्याः ॥

'सर्वेषां' अमात्यानाम्। 'सम्परायो' युद्धं तदुपयोगी साम्परायिकम्। 'क्रियासाधारणत्वात्' राज्यरक्षणरूपैकक्रियत्वात्। 'चारो' जनपदचरितज्ञानाय प्रच्छन्नचारी। तच्चरितज्ञः प्रच्छन्नः 'प्रतिचारः'। 'मन्त्रप्रणिधयः' राज्ञो मन्त्रान्वेष्टारः। एते परराजसम्बन्धिनः सर्पाः शङ्कनीया इत्यर्थः। 'तत्प्रयोजनत्वात्' यतस्तदेव चरितज्ञानं चारादीनां प्रयोजनम्। 'प्रत्यक्षा वृत्तिः' स्वयं कार्यदर्शनम्। 'परोक्षा' चारैः चरितज्ञानम्। 'एकान्ततः' अन्यतरवृत्तिमात्राश्रयेण। 'भृत्यपक्षाः' भृत्याः। पूर्वं सम्मानिताः पश्चाद्विमानिताः। 'अभ्याख्यानं' आभिमुख्येन गुणाख्यानम्। 'दानमानस्थानव्यवरोपिताः' दानेन व्यवरोपिता मानेन व्यवरोपिताः स्थानेन व्यवरोपिताः। 'स्वदोषोपहताः' आत्मदोषदूषिताः एवमादयः 'सततं प्रत्यवेक्षितव्याः' तेन

1 I. O., रोधितहृतसर्वस्वाः

कारणेन । 'एतेषां' सम्बन्धिषु धर्मादिषु यतेत । 'स्वविषयाश्रावः' स्वविषयमन्त्रस्याऽश्रावणं अप्रकाशनं कार्यम् । 'महत्सु' कार्येषु 'स्वात्मनि' रक्षितव्याः । 'धर्मनित्या' धार्मिकाः । 'सङ्ग्रहेषु' अर्थस्येति शेषः । 'प्रत्यन्तेषु' स्वमण्डलप्रत्यन्तदेशेषु [1]'मौलाः' तद्देशजाताः[1] ।

विष्णुः[2]

आकर [ लवण ] शुल्कतरनागवनेष्वाप्तान्नियुञ्जीत । धर्मिष्ठान् धर्मकार्येषु । निपुणानर्थकार्येषु । शूरान् सङ्ग्रामकार्येषु । उग्रानुग्रेषु । षण्ढान् स्त्रीषु[3] ।

मनुः[4]

तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥
सांवत्सरिकमाप्तैश्च[5] राष्ट्रादाहारयेद्बलिम् ।
स्यादाश्रयपरो लोके वर्त्तेत पितृवन्नृषु ॥
अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ।

1 The entire commentary is reproduced *verbatim*, without acknowledgment by वी. मि., pp. 186-7. The various quotations also in वी. मि., are taken bodily from कल्पतरु

2 वि. स्मृ., 3, 16-21 ; वी. मि., p. 187

3 तरो नौकादिः तज्जं शुल्कं जलजं शुल्कं इति यावत् । 'नागाः' गजाः । नागवन्ति वनानि इति वा । नगः पर्वतः । तत्सम्बन्धि नागम् । गिरिदुर्गमिति वा ॥ ( केशववैजयन्ती, Jolly, p. 11, note. )

4 VII, 62

5 VII, 80-81 ; वी. मि., p. 187

तेऽस्य सर्वाण्यवीक्षेरन्नृणां[1] कार्याणि कुर्वताम् ॥

'साम्वत्सरिकं बलिं' सम्वत्सरग्राह्यं करम्[2] ।

तथा[3]

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥
अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया ।
नृपतौ कोशराष्ट्रे तु दूते सन्धिविपर्य्ययौ ॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् ।
दूतस्तत् कुरुते कर्म भिद्यन्ते येन मानवाः ॥
स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टां कृत्येषु च चिकीर्षितम् ॥
बुध्वा च सर्वं तत्वेन परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथाऽऽत्मानं न पीडयेत् ॥

महाभारते[4]

न तु हन्यान्महीपालो दूतं कस्याश्चिदापदि ।
दूतहन्ता तु नरकमाविशेत्सचिवैः सह ॥

1 वी. मि., p. 187, Corrects this rightly as अवेक्षेरन्

2 Reproduced by वी. मि., p. 187

3 म. स्मृ., VII, 63-69 ; वी. मि., p. 188

4 वी. मि., p. 189

श्रीरामायणे[1]

दूता न वध्याः प्रवदन्ति सन्तो
दूतस्य दण्डा बहवः प्रदिष्टाः ।
वैरूप्यमङ्गेषु कशाभिघातो
मौण्ड्यं तथा लक्षणसन्निपातः ॥
एतान् हि दूते प्रवदन्ति दण्डान्
दूतस्य दण्डो हि वधो न दृष्टः ॥

इत्यमात्याः ।

## अथाऽनुजीविवृत्तम्

तत्र मत्स्यपुराणे

मत्स्य उवाच[2]

यथाऽनुवर्तितव्यं स्यान्मनो राज्ञोऽनुजीविभिः ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥
ज्ञात्वा सर्वात्मना कार्यं स्वशक्त्या रविनन्दन ।
आक्षिप्य[3] वचनं तस्य न वक्तव्यं कदाचन ॥
अनुकूलं प्रियं त्वस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥

1 So वी. मि. p. 189, but सुन्दरकाण्ड, 52, 14-15 ( Mylapore ed. p. 632 ) reads, न दूतवध्यां प्रवदन्ति सन्तः

2 I. O, and A. S. B; वी. मि., p. 189, मत्स्य. पु,. cap. 216

3 I. O., आटोप; वी. मि., p. 189, आक्षिप्य

यथार्थमस्य[1] वक्तव्यं स्वस्थे चेतसि पार्थिव ।
स्वार्थः सुहृद्भिर्वक्तव्यो न स्वयं हि कदाचन ॥
कार्यातिपातः सर्वेषु रक्षितव्यः प्रयत्नतः ।
न च हिंस्याद्धनं किञ्चिन्नियुक्तेन च कर्म्मणि ॥
नोपेक्ष्यं तस्य मानं च तस्य राज्ञः प्रियो भवेत् ।
राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥
राजलीला न कर्तव्या तद्विष्टं च विवर्जयेत्[2] ।
अन्तःपुरजनाध्यक्षवैरीभूतैर्निराकृतैः ॥
शंसनं[3] न व्रजेद्राजन् विना पार्थिवशासनम् ।
निःस्नेहतां चाऽवमानं तत्प्रयत्नेन गोपयेत् ॥
यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ।
नृपेण श्रावितं यत्स्याद्गुह्यागुह्यं [4]नृपोत्तम ॥
न तत्संश्रावयेल्लोके[5] तथा राज्ञः प्रियो भवेत् ।
आज्ञाप्यमाने वाऽन्यस्मिन् समुत्थाय त्वरान्वितः ॥
अहं किं करवाणीति वाच्यो राजा विजानता ।
कार्यावस्थां च विज्ञाय कार्यमेतत्तथा भवेत् ॥
सततं क्रियमाणेऽस्मिंल्लाघवं तु भवेद्ध्रुवम् ।

1 म. पु., c. 216, 4 : परार्थमस्य

2 म. पु., has the following additional lines :

राज्ञः समोऽधिको वा कार्यो वेषो विजानता ।
द्यूतादिषु तथैवाऽन्यत् कौशलं तु प्रदर्शयेत् ॥
प्रदर्श्य कौशलं चाऽस्य राजानं तु विशेषयेत् ।

3 म. पु., p. 460, संसर्ग for शंसनं

4 म. पु., वाच्यावाच्यं

5 *Ibid*, यच्च गुह्यं भवेद्राज्ञो

राजसेवां ततः कुर्याद्भूतये भूतिवर्द्धनीम् ।
नमस्कार्याः सदा चाऽस्य पुत्रवल्लभमन्त्रिणः ॥
सचिवैश्चाऽस्य विश्वासो न तु कार्यः कथञ्चन ।
अपृष्टश्चाऽस्य न ब्रूयात् कामं ब्रूयात्तथाऽऽपदि ॥
हितं पथ्यं च वचनं हितैः सह सुनिश्चितम् ।
चित्तं चैवाऽस्य विज्ञेयं नित्यमेवाऽनुजीविना ॥
भर्त्तुराराधनं कुर्यात् चित्तज्ञो मानवः सुखम् ।
रागापरागौ चैवाऽस्य विज्ञेयौ भूतिमिच्छता ॥
त्यजेद्विरक्तं नृपतिं रक्ताद्वृत्तिं तु कारयेत् ।
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ॥
आशावर्द्धनकं कृत्वा फलनाशं करोति च ।
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः ॥
वाक्यं समन्दं वदति वृत्तिच्छेदं करोति च ।
प्रदेशवाक्यैर्मुदितो न सम्भावयतेऽन्यथा ॥
आराधनासु सर्वासु सुप्तवच्च विचेष्टते ।
कथासु दोषं क्षिपति वाक्यभङ्गं करोति च ॥
लज्जतेऽभिमुखश्चैव गुणसङ्कीर्तनेऽपि च ।
दृष्टिं क्षिपत्यथाऽन्यत्र क्रियमाणे च कर्मणि ॥
विरक्तलक्षणं ह्येतच्छृणु रक्तस्य लक्षणम् ।
हृष्ट्वा[1] प्रसन्नो भवति वाक्यं गृह्णाति चाऽऽदरात् ॥
कुशलादिपरिप्रश्नं सम्प्रयच्छति चाऽऽसनम् ।
विविक्तदर्शने चाऽस्य रहस्येनं न शङ्कते ॥

1 म. पु., p. 460 and वी. मि., p. 192, दृष्ट्वा

[ जायते हृष्टवदनः श्रुत्वा तस्य तु सङ्कथाम् ।
अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दते[1] ॥ ]

उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ।
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ॥

इति रक्तस्य कर्तव्या सेवा रविकुलोद्वह ।
आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ॥

मित्रं न चापत्सु तथा च भृत्यं
त्यजन्ति ये निर्गुणमप्रमेयम् ।
प्रभुं[2] विशेषेण च ते व्रजन्ति
सुरेन्द्रधामाऽमरबृन्दजुष्टम् ॥

इत्यनुजीविवृत्तम् ॥

1 [ ] I. O., A. S. B. and वी. मि., p. 192

2 म. पु., p. 461, विभुं for प्रभुं

# ५

# अथ दुर्गाणि[1]

याज्ञवल्क्यः[2]

रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥

'पशव्यं' पशुभ्यो हितम् । 'जाङ्गलं' उच्चभूभागप्रायम्[3]।

मनुः[4]

जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम् ।
रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥

मत्स्यपुराणे[5]

वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः ।

1 cf. वी. मि., p. 199 ; राजनी. र., pp. 26–28 ; राज. कौ., pp. 113–114; नी. म., pp. 77–78

2 I, 321

3 मिताक्षरा :—"यद्यपि अल्पोदकतरुपर्वतोद्देशो जाङ्गलः, तथाऽप्यत्र सजलतरुपर्वतो देशो जाङ्गलशब्देनाऽभिधीयते" ।

4 VII, 69.

"अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः ।
स ज्ञेयो जाङ्गलो देशो बहुधान्यादिसंयुतः" ॥
इति कुल्लूकटीकायाम् ।

5 cap. 217, sl. 2 ff; वी. मि., p. 198

किञ्चिद्ब्राह्मणसंयुक्तं [1]बहुकर्मकरं तथा ॥
अदेवमातृकं रम्यमनुरक्तजनावृतम् ।
करैरपीडितं वाऽपि बहुपुष्पफलं तथा ॥
अगम्यं परचक्राणां तद्वासगृहमापदि ।
समदुःखसुखं राज्ञः सततं च प्रिये स्थितम्[2] ॥
सरीसृपविहीनं च व्यालतस्करवर्जितम्[3] ।
एवंविधं यथालाभं राजा विषयमावसेत् ॥

मनुः[4]

धन्वदुर्गं महीदुर्गं मृद्दुर्गं वार्क्षमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम्[5] ॥

'धन्वं' मरुभूमिः । 'महीदुर्गं' अतिनिम्नोन्नता भूमिः । 'वार्क्षं' वनदुर्गम् ।

बृहस्पतिः

आत्मदारार्थलोकानां सञ्चितानां च गुप्तये ।
नृपतिः कारयेद्दुर्गं प्राकारद्वारसंयुतम् ॥

1 Udaipur Ms., बद्धकर्मकरं

2 म. पु., p. 461 and वी. मि., p. 198, प्रियमास्थितम्

3 म. पु., p. 461, व्याघ्रतस्करवर्जितम्

4 VII, 70 ; वी. मि., p. 202

5 cf. महाभारत ; नी. म., p. 78 :

धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षट् ॥

मनुः[1]

सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
बाहुगुण्येन तेषां हि गिरिदुर्गं विशिष्यते ॥

तथा[2]

एकः शतं योधयति [3]प्रासादस्थो धनुर्द्धरः ।
शतं शतसहस्राणि तस्माद्दुर्गं विशिष्यते[4] ॥

बृहस्पतिः[5]

भूतानामिन्धनरसैर्वैत्रशष्पान्नवाहनैः ।
यन्त्रायुधैश्च विविधैः स्निग्धैः शूरैर्नरैर्युतम् ॥
वेदविद्याविदो विप्रान् क्षत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्याः करास्तेभ्यः प्रदेयाद्गृहभूमयः[6] ।
मुक्ताभाव्याश्च नृपतेर्लेखयित्वा स्वशासने ॥
नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं सदा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे विनयं तथा ॥
समा निम्नोन्नता वाऽपि यत्र भूमिर्यथाविधा ।

1 VII, 71 ; वी. मि. , p. 203

2 म. स्मृ., VII, 74 ; नी. म., p. 78 explains:—दशगुणा अपि पराभवं प्राप्नुवन्ति इत्यर्थः ।

3 वी. मि., p. 202, प्राकारस्थः ; so राज. कौ., p. 113

4 *Ibid*, विधीयते for विशिष्यते

5 वी. मि., p. 204

6 I. O. and A. S. B., प्रदद्यात् for प्रदेयात् ; so also वी. मि., p. 204

शालाट्टपरिखाद्याश्च कर्तव्याश्च तथाविधाः ॥
समन्तात्तत्र वेश्मानि कुर्युः प्रकृतयस्ततः ।
द्विजवैश्यवणिक्शिल्पिकारुकारक्षकास्तथा ॥
स्थलावस्थाननिष्काशभ्रमश्वभ्रचतुष्पथान् ।
समाजविक्रयस्थानगोव्रजांश्चैव कल्पयेत् ॥

'सिद्धैः' अनुरक्तैः । 'भूमय' इति विभक्तिव्यत्ययः । आराध्यकरविशेषः ? ।

इति दुर्गाणि ॥

## अथ पुरनिर्माणम्

तत्र मत्स्यपुराणे[1]

गोपुरं सकपाटं च तत्र स्यात्सुमनोहरम् ।
सपताकं गजारूढो येन राजा विशेत्पुरम् ॥
चतस्रश्च तथा तत्र कार्याश्चाऽऽपणवीथयः[2] ।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् ॥
वीथ्यग्रे च [3]द्वितीये च राजवेश्म विधीयते[4] ।
धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके ॥

1 म. पु., c. 217, 9-14 ; cf राज. कौ., pp. 118-125.

2 म. पु., and वी. मि., p. 203, have आयतवीथयः, but all three manuscripts read आपणवीथयः

3 I. O. and A. S. B., द्वितीयेऽत्र ; वी. मि., p. 203 reads द्वितीये च

4 राज. कौ., p. 124, cites this line from विष्णुधर्मोत्तर

चतुर्थे चैव वीथ्यग्रे गोपुरं तु विधीयते ।
आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम् ॥
स्रक्तिहीनं त्रिकोणं च यवमध्यं तथैव च ।
अर्द्धचन्द्रप्रकारं च वज्राकारं च कारयेत् ॥
अर्द्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वशात् ।
अन्यत्र तत्र कर्तव्यं प्रयत्नेन विजानता ॥

'गोपुरं' पुरद्वारम् । 'आयतं' दीर्घम् । 'स्रक्तिहीनं' कोणरहितम् ।

बृहस्पतिः[1]

दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥
माल्यधूपासवोपेतां वीररत्नसमन्विताम् ।
प्रतिमालेख्यदेवैस्तु युक्तामग्न्यम्बुना तथा ॥

मत्स्यपुराणे[2]

राज्ञा कोशगृहं कार्यं दक्षिणे राजवेश्मनः[3] ।
तस्याऽपि दक्षिणे भागे गजस्थानं विधीयते ॥
गजानां प्राङ्मुखी शाला कर्तव्या वाऽप्युदङ्मुखी ।
आग्नेये च तथा भागे आयुधागारमिष्यते ॥

1 वी. मि., p. 206

2 वी. मि., p. 206 ; म. पु., ch. 217, 15–41

3 These ślokas are attributed to विष्णुधर्मोत्तरपुराण by राज. कौ., p. 124, but they are found in म. पु., c. 217, 15

महानसं च धर्मज्ञ कर्मशालास्तथा पराः ।
गृहं पुरोधसः कार्यं वामतो राजवेश्मनः ॥
मन्त्रिवेदविदश्चैव चिकित्साकर्त्तुरेव च ।
तत्रैव च तथा भागे कोष्ठागारं विधीयते ॥
गवां स्थानं तथैवाऽत्र तुरगाणां तथैव च ।
उत्तराभिमुखा श्रेणी तुरङ्गाणां विधीयते[1] ॥
प्राङ्मुखी वाऽथ धर्मज्ञ परिशिष्टास्तु गर्हिताः[2] ।
तुरगास्ते तथा धार्याः प्रदीपे सर्वरात्रिकैः ॥
कुक्कुटान्[3] वानरांश्चैव मर्कटांश्च विशेषतः ।
धारयेदश्वशालासु सवत्सां धेनुमेव च ॥
अजाश्च धार्या यत्नेन तुरगाणां हितैषिणा ।
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ॥
अस्तङ्गते न कर्तव्या देवदेवे दिवाकरे ।
ततस्तत्र यथास्थानं राजा विज्ञाय सारथीन् ॥
दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ।
योधानां शिल्पिनां चैव सर्वेषामविशेषतः ॥

1 I. O. and A. S. B. read तथैव च, but the text is confirmed by वी. मि. p. 206 and राज. कौ., p. 125

2 म. पु., p. 426 and वी. मि., p. 207: दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः ।

3 वी. मि., p. 207 explains : मन्दुरास्थाश्वानां दृष्टिदोषनिरासाय कुक्कुटादिस्थापनमुक्तम् । Kautilya gives a better reason : viz. prevention of fire and poisonous serpents by these animals ( अर्थ. शा., Mysore *edn.* p. 40 and p. 132 )

दद्यादावसथान् दुर्गे मन्त्रकालविदां शुभान् ।
गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥

आहरेत भृशं राजा दुर्गे हि प्रबला रुजः ।
कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥

न बहूनामतो दुर्गं विना कार्यं तथा भवेत् ।
दुर्गे च यन्त्राः कर्तव्या नानाप्रहरणान्विताः ॥

सहस्रघातिनो राज्ञा तैस्तु रक्षा विधीयते ।
दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥

सञ्चयश्चाऽत्र सर्वेषामायुधानां प्रशस्यते ।
धनुषां क्षेपणीयानां तोमराणां च पार्थिव ॥

शराणामथ खड्गानां कवचानां तथैव च ।
लगुडानां गुडानां च हुडानां परिघैः सह ॥

अश्मनां च प्रभूतानां मुद्गराणां तथैव च ।
त्रिशूलानां पट्टिशानां कणपानां च पार्थिव ॥

प्रासानां च सशूलानां शक्तीनां च नरोत्तम ।
परश्वधानां चक्राणां वर्मणां चर्मभिः सह ॥

कुद्दालरज्जुवेत्राणां पिटकानां तथैव च ।
हिंसकानां[1] च दात्राणामङ्गाराणां च सञ्चयाः ॥

सर्वेषां शिल्पिभाण्डानां सञ्चयश्चाऽत्र शिष्यते ।
वादित्राणां च सर्व्वेषामोषधीनां तथैव च ॥

यवसानां प्रभूतानामिन्धनस्य च सञ्चयः ।
गुडस्य सर्वतैलानां गोरसानां तथैव च ॥

1 म. पु., p. 462, तुषाणां चैव दात्राणाम्

वसानामथ मज्जानां स्नायूनामस्थिभिः सह ।
गोचर्मपटहानां च धान्यानां सर्वतस्तथा ॥
तथैवाऽभ्रपटानां च यवगोधूमयोरपि ।
रत्नानां सर्ववस्त्राणां लोहानामप्यशेषतः ॥
कलायमुद्गमाषाणां चणकानां तिलैः सह ।
तथा च सर्वसस्यानां पांसुगोमययोरपि ॥
शणसर्जुरसम्पूर्णं[1] जतुलाक्षा च टङ्कणम् ।
राजा सञ्चिनुयाद् दुर्गे यच्चाऽन्यदपि किञ्चन ॥
कुम्भेष्वाशीविषाः कार्याः व्यालसिंहादयस्तथा ।
मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ॥
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् ।
कर्तव्यानि महाभाग यत्नेन पृथिवीक्षिता ॥

तथा[2]

यन्त्रायुधाट्टालमयोपपन्नं
समग्रधान्यौषधिसम्प्रयुक्तम् ।
वणिग्जनैश्चाऽऽवृतमावसेत
दुर्गं सुगुप्तं नृपतिः सदैव ॥

तथा[3]

शिरीषोदुम्बरशमीबीजपूर्णं घृतप्लुतम् ।
क्षुद्योगः कथितो राजन् मासार्द्धस्य पुरातनैः ॥

1 म. पु., p. 462, शणसर्जरसं भूर्जं
2 म. पु., ch. 217, sl. 87
3 म. पु., ch. 219, sl. 2–8 ; वी. मि., p. 209

कशेरूत्फलमूलानि इक्षुमूलं तथाविधम् ।
दूर्वाक्षीरघृतैर्मण्डः सिद्धोऽयं मासिकः[1] परः ॥

नरं शस्त्रहतं प्राप्य तस्यास्थि अरणिर्भवेत्[2] ।
कल्माषवेणुना तत्र जनयेत्तु विभावसुम् ॥

गृहे त्रिरपसव्यं तु क्रियते यत्र पार्थिवः ।
नाऽन्योऽग्निर्ज्वलते तत्र नाऽत्र कार्या विचारणा ॥

कार्पासास्थ्न भुजङ्गस्य तथा निर्मोचनं भवेत् ।
सर्पनिर्वासने धूपः प्रशस्तः सततं गृहे ॥

सामुद्रसैन्धवयवा विद्युद्दग्धा च मृत्तिका ।
तथाऽनुलिप्तं यद्वेश्म नाऽग्निना दह्यते नृप ॥
दिवा च दुर्गे रक्ष्योऽग्निर्वाति वाते विशेषतः ॥

इति पुरनिर्माणम् ॥

## अथ पुरभूशुद्धिः

तत्र देवीपुराणे[3]

इन्द्र उवाच

कीदृशं तु पुरं कार्यं नगरं कीदृशं शुभम् ।
कस्मिन् स्थाने सुरश्रेष्ठ एतदिच्छामि वेदितुम् ॥

1 I. O., A. S. B. and वी. मि., p. 209 read माक्षिक ; म. पु., p. 466 confirms the text.

2 म. पु., ch. 219, sl. 4 : न तस्य मरणं भवेत्

3 वी. मि., p. 214

ब्रह्मोवाच

सर्वौषधिभवे देशे सर्वलोकसुखावहे ।
पूर्वोत्तरप्लवे स्थाने कार्यं शक्रपुरादिकम् ॥
शर्कराद्यश्मरहिते कटुकण्टकवर्ज्जिते ।
संहते पांसुरहिते कुशादिभिरनावृते ॥
चलगन्धसमायुक्ता मही स्वादोपलक्षिता ।
चण्डालपतितत्यक्ता शरावशकलैर्विना ॥
देवावासपरित्यक्ता निराबाधा मनोरमा ।
उदगाधिप्लवा गाधा वैषम्यादिविवर्जिता ॥
शुद्धा सा दहनाद्यैश्च अथ चण्डेश्वरान्विता ।
सर्वेश्वरयुता वाऽपि अन्यथा भयदा मही ॥
पूर्ववर्णविपर्यस्ता[1] स्थानकालादिसूत्रगा ।
स्वामिश्रेष्ठिपुरादीनां भयदा जायते मही ॥
कश्मलाद्यैः परिक्लिष्टा पूतनादिसमाकुला ।
पताकी वर्जनीया तु सर्वदोषकरी मही ॥
वत्सरं या परित्यक्ता कृष्णधान्यरुहा च या ।
सा मही शुभदा ज्ञेया या च तृप्तिकरी भवेत् ॥
रक्ष्या देव्यः सदैवाऽत्र पूजनीयाः स्वभागगाः ।
स्थानानि कल्पयेत्तासामधिवासं तु कारयेत् ॥

'चण्डेश्वरो' महादेवस्य गणविशेषः । 'अधिवासः' स्थापनम्[2] ।

1 वी. मि., p. 214, पूर्णवर्ण

2 Reproduced by वी. मि., p. 215

तथा

चतुर्दण्डः प्रकर्तव्यो भूमावादौ परिग्रहः ।
गां सवत्सां समादाय कुम्भं धान्यमयं[1] तथा ॥
सवस्त्रं हेमगर्भं तु सहकारदलान्वितम् ।
पृथ्वीं सङ्कल्पयेत्तस्मिन्मेरुकर्णिकशोभिताम् ॥
वनशैलसमायुक्तां सागरैः परिवेष्टिताम् ।
एवं सम्पूजयित्वा तु देवदेवं त्रिलोचनम् ॥
कुमारादिशिवादींश्च विचार्यादिमहामहीम् ।
सूर्यादिलोकपालादिनागयक्षादिदेवताः ॥
पूर्वं सम्पूजयित्वा तु पश्चाद्दद्याद्दिशां बलिम् ।
स्वप्नमाणवकं जप्त्वा शेते तत्र यथासुखम् ॥
आचार्यः सूत्रधारश्च शुभं स्वप्नं निशाक्षये ।
निमित्तं शकुनं दृष्ट्वा सूत्रयेल्लक्षितां दिशम्[2] ॥

'स्वप्नमाणवकं' "यज्जाग्रत" इति[3] ।

चित्रास्वात्यन्तरे पूर्वा पुष्यपित्र्यसमागमे ।
उत्तराध्रुवमध्यस्थाः शेषाः सिद्धा यथागमम् ॥

'चित्रास्वात्यो'रुदितयोर्मध्ये या, तथा पुष्यमघानक्षत्राभ्यां चार्जवेन संयुता सा पूर्वदिगित्यर्थः[4] ।

1 So I. O., A. S. B. and वी. मि., p. 217, but Udaipur Ms. reads धान्यसमं

2 I. O., सूत्रे यल्लक्षतां दिशम्

3 Reproduced by वी. मि., p. 218

4 Reproduced by वी. मि., p. 218

शकुना तदभावे तु पूर्वासां साधयेद्द्विजः ।
एवं दिशासु सिद्धासु सूत्रपातं समाचरेत् ॥
आचार्यं पूजयित्वा तु सूत्रधारं द्विजोत्तमान् ।
देवतायतनं पूर्वमाचार्यं ब्राह्मणौकसम् ॥
राजधाम तु शेषांस्तु गृहान् वर्णक्रमाद्गुरुः ।
पुरं वृत्तायतं कार्यं [1]त्र्यस्रं वा चतुरस्रकम् ॥
यथा स्थानविभागेन हट्टशोभासमन्वितम् ।
राजधामाग्रतः कार्यं देवधाम अथाऽपि वा ॥
सुसूत्रं देवतायुक्तं शिवमातृगणावृतम् ।
मङ्गला [2]धनुद्दा कार्या मध्यान्ते सर्वसिद्धिदा ॥
न सूर्याद्ब्रह्मियाम्ये वा नैर्ऋते वा हरिः क्वचित् ।
न विष्णुः पश्चिमे सौम्ये[3] वायव्यां कारयेच्छिवम् ॥
कृते विनश्यते कर्त्ता तत्स्थानं चोद्वसं भवेत् ।
[ देवो न पूज्यते तत्र तस्मिन् स्थाने स्वके शुभे ॥
विसूत्रेषु प्रवक्ष्यामि येन शान्तिं शुभं भवेत्[4] ] ।
नगराणां पुराणां च देवानां गोपुरादिषु ॥
विमार्गेषु शिवः शस्तः सम्मुखः सौम्यभागगः ।
सौम्याग्रे सर्वतो दुर्गे पुरं नन्दति रक्षितम् ॥
तस्माद्दुर्गः प्रकर्तव्यो नगरेषु पुरादिषु ।

1 वी. मि., p. 218, त्र्यस्रं
2 *Ibid*, धनदा
3 A. S. B., सोमे
4 [ ] A. S. B., I. O. and वी. मि., p. 219

महालक्ष्म्यादिका शक्र क्षेमकारी सचण्डिका ॥
मङ्गला मङ्गलारूपा महिषघ्नी शिवानना ।
यथा स्थानविभागस्था सर्वलोके सुखावहा[1] ॥
महालक्ष्मीः पुरः शस्ता आग्नेये महिषापहा ।
याम्यांश्चैव शिवा प्रोक्ता[2] चर्चिका पश्चिमे पुरात् ॥
उत्तरे शुभदा क्षेमा पञ्चैताः शान्तिदाः पुरे ।
नगरे नव कर्तव्या दुर्गे पञ्चैव चण्डिकाः ॥

तथा[3]

नगरं देवतावीतं[4] समस्तप्रकृतीयुतम् ।
सप्त पञ्च पुरैः कार्यं मण्डपैरुपशोभितम् ॥
कोष्ठकाः सश्रियः कार्या मण्डपादग्रतः शुभाः ।
एवं देवालयोपेतं सर्ववर्णसमन्वितम् ॥
नवदुर्गसमायुक्तं नगरं परिकीर्तितम् ।
पुरं हट्टसमायुक्तं देवतादिसमाकुलम् ॥
हट्टं हेममणिर्वस्त्रं पत्त्रोर्णा चर्मविक्रयम् ।
सुरापेयादिकं यस्मिंस्तत्पुरं पत्तने शृणु ॥
असंहतं समं कार्यं वणिक् हट्टं सुशोभनम् ।
सुरनाम स्वनामं वा पत्तनं सर्वकामदम् ॥

1 वी. मि., p. 219, शिवा नरा (?)

2 A. S. B. and I. O., याम्यां शिवा शुभा प्रोक्ता; so also वी. मि., p. 219

3 वी. मि., p. 215

4 Udaipur Ms. reads दैवताबीजम् (?)

अवेधं कारयेत्पङ्कगर्त्तादिभिः सुरोत्तम ।
उभयोरन्तरे कार्यं देवतायतनादिकम् ॥
देवलक्ष्मविहीनं तु समदृष्टिगतं शुभम् ।
चिह्नदृष्टिगते देवे न दृष्टेः सन्निरूपणम् ॥
समे मानसमायुक्ते कार्यदृष्टिसमा शुभा ।
ऊनाधिका[1] न कर्तव्या व्यालसिंहादिनावृते[2] ॥
एवं कुर्यात्पुरे हट्टं प्राकारान्तर्गतं शुभम् ।
चतुर्हस्तं[3] समं कार्यं समसूत्रं सुशोभनम् ॥
पथः समं पुरं कार्यं सममार्गविनिर्गमम् ।
चतुष्पथानि शुद्धानि नित्यं पूजायुतानि च ॥
देवान्तराणि कार्याणि स्वाधिकार्यावृतानि च ।
देवान्तरेषु मन्त्रज्ञाः स्वे स्वे देशाः शुभावहाः ॥
भिन्ना बहुप्रदा लोके [4]यथाशास्तपरिग्रहः ।
न शुभा मन्त्रहीनास्तु द्विजाद्या नैष्ठिकास्तथा ॥
चर्चिकाद्यास्तथा शक्र मन्त्रहीना भयावहाः ।
अग्रतः पृष्ठतो देवा उभयोः पार्श्वयोर्द्विजाः ॥
हस्तानां तु शतं त्याज्यं नृपराष्ट्रसुखार्थिभिः ।
दृष्टिभङ्गो न कर्तव्यो रक्षेद्देवीषु यत्नतः ॥
दण्डाष्टकं सुविस्तीर्णं कृते राजा विनश्यति ।

1 वी. मि., p. 215 reads द्रमाधिका (?)

2 I. O., वृतैः

3 वी. मि., p. 215 and Udaipur Ms. read चतुर्हट्टं

4 वी. मि., p. 215, यथा शास्त्रपरिग्रहः

तस्माद्दृष्टिः सदा देया तोरणान्तर्गता शुभा ॥

अष्टहस्तं सुशोभाढ्यं शैलवृक्षमयं च वा ।
तोरणं शस्यते देव्या वापीकूपजलं वनम् ॥

पूर्वोत्तरं तथैशान्यामारामः शुभदः कृतः ।
देवीनां मातृकाणां च स भवेत्सर्वकामदः ॥

यथाशुभग्रहाद्दैवाद्यच्च कालकृतं भवेत् ।
तत्सर्वं देवतागारे कृते भवति शोभनम् ॥

बलिजाप्यक्रिया नित्यं मातॄणां च शुभा भवेत् ।
पुरपत्तनग्रामाणां ब्रह्मपुर्यः सकामदाः ॥

ब्रह्मविद्याकलोपेता यत्र वेदविदोऽवसन् ।
सा पुरी कमला नाम सर्वलोकसुखावहा ॥

विद्या ह्येका तथा द्वित्रा चतस्रो यत्र संस्थिताः ।
रुद्रो देवी सविजया गायत्री चक्रमात्मना ॥

गृहाः पङ्क्तिगताः कार्याः शुभवर्त्म ऋजुस्थिताः ।
पूर्वोत्तरसुमार्गस्थाः सजला देवतान्विताः ॥

ब्रह्मत्रिदशपूजार्थं मठादिमुपकल्पयेत् ।
पाठस्थानानि कुर्वीत शिवायतनवेधसोः ॥

पुरे वा नगरे वत्स राजधान्यां च पत्तने ।
दुर्गे हट्टे शुभा दृष्टिर्महालक्ष्म्याः समङ्गला ॥

मुखलिङ्गगणेशानां[1] धनदस्य विशेषतः ।
श्रियश्च सौम्यरूपायाः स्वामीशस्य शुभस्य च ॥

1 वी. मि., p. 217, शिवलिङ्ग

रक्षोदेवीषु चोग्रासु दृष्टिर्देया न चाऽन्यथा ।
बाह्ये वनोपकण्ठे च नदीनदतटेऽथवा[1] ॥
प्रासादे चोत्तमा कार्या तीर्थे हट्टानुगाऽथवा ।
वाराही भैरवी चोग्रा नारसिंही त्रिविक्रमी[2] ॥
पुरपत्तनगेहेषु दृष्टिर्वर्ज्या प्रयत्नतः ।
उग्रा दृष्टिर्हरेद्राष्ट्रं दारुणा नगरादिकम् ॥
नरसिंहवराहाणां दृष्टिर्हन्यात्प्रियं[3] जनम् ।
तस्माद्दृष्टिः शुभा कार्या समा सर्वगता ततः ॥
विवाहेऽपि शुभा दृष्टिः समा भवति नाऽन्यथा ।
अतो यत्नेन देवानां दृष्टिः सौम्या प्रशस्यते ॥
ग्रहाणां सौम्यरूपाणां लग्ने दृष्टिः शुभावहा[4] ।
पुरपत्तनदुर्गेषु तथा सौम्या शुभावहा ॥
एवं हट्टे पुरे दुर्गे देया दृष्टिः शुभा नृप ।
शुभार्थे सौम्यरूपाणामुग्राणां परिवर्जयेत् ॥
आवाहने जले वाऽथ उग्रा दृष्टिः शुभावहा ॥

इति पुरभूशुद्धिः ॥

1 A. S. B. and I. O. read यथा for अथवा, which वी. मि., p. 217 adopts like Udaipur Ms.

2 I. O. and A. S. B. read त्रैविक्रमी, which breaks the metre.

3 वी. मि., p. 217, श्रियं जनम्

4 So वी. मि.,; but I. O. and A. S. B. read शुभा यथा

## ६

# अथ वास्तुकर्मविधिः

तत्र मत्स्यपुराणे[1]

सूत उवाच

( कालफलम् )

अथाऽतः सम्प्रवक्ष्यामि गृहकालविनिर्णयम्[2] ।
यथाकालं शुभं ज्ञात्वा तदा भवनमारभेत् ॥
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धनरत्नानि[3] ज्येष्ठे मृत्युं तथैव च ॥
आषाढे भृत्यरत्नानि [4]वस्त्रं वर्ग्यमवाप्नुयात् ।
श्रावणे मित्रलाभन्तु[5] हानिं भाद्रपदे तथा ॥
पत्नीनाशमाश्वयुजे कार्तिके धनधान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥
लाभं च बहुशो विन्देदग्निं माघे विनिर्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालफलं स्मृतम् ॥

1 I. O. and वी. मि., p. 219
2 म. पु., ch. 253 ( p. 520 )
3 म. पु., धेनुरत्नानि
4 वी. मि., p. 220, पशुवर्गम् ; so म. पु.
5 म. पु., भृत्यलाभं for मित्रलाभम्

( नक्षत्रफलम् )

अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
स्वातिर्हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥

( वारफलम् )

आदित्यभौमवर्ज्यं च सर्वे वाराः शुभावहाः ॥

( योगफलम् )

वर्ज्यं व्याघातशूलेषु व्यतिपातातिगण्डयोः ।
विष्कम्भगण्डपरिघवज्रयोगेषु [न] कारयेत्[1] ॥

( मुहूर्तफलम् )

स्वातौ मैत्रेय माहेन्द्रगन्धर्वाभिजिद्रौहिणे ।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥

( लग्नफलम् )

चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
स्तम्भोच्छ्रयादि कर्तव्यमन्यत्र परिवर्जयेत् ॥

( भूमिपरीक्षा )

प्रासादेष्वेवमेव स्यात्कूपवापीषु शस्यते ।
पूर्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत् ॥
श्वेता रक्ता तथा पीता कृष्णा चैवाऽनुपूर्वशः ।
विप्रादेः शस्यते भूमिरतः कार्यं परीक्षणम् ॥

1 म. पु., p. 521 inserts the negative particle.

विप्राणां मधुरास्वादा कषाया क्षत्रियस्य तु ।
कषायकटुका तद्वद्वैश्यशूद्रेषु शस्यते[1] ॥
रत्निमात्रे[2] तु वै [3]गर्त्ते स्वनुलिप्ते च सर्वशः ।
घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम् ॥
ज्वालयेद् भूपरीक्षार्थं पूर्णं तत्सर्वदिङ्मुखम् ।
दीप्तां पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः ॥
वास्तुः सामूहिको नाम दीप्यते सर्वतस्तु यः ।
शुभदः सर्ववर्णानां प्रासादेषु गृहेषु च ॥
रत्निमात्रं तु वै गर्त्तं परीक्ष्यं खातपूरणैः ।
अधिके श्रियमाप्नोति न्यूने हानिं समे समम् ॥
फालकृष्टेऽथवा देशे सर्वबीजानि वापयेत् ।
त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ॥
ज्येष्ठोत्तमकनिष्ठा भूर्वर्जयेदितरां सदा ।
पञ्चगव्यौषधिजलैः परीक्षित्वाऽथ सेचयेत् ॥
एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु ।
पश्चाल्लेपेन[4] वाऽऽलिप्य सूत्रेणाऽऽलोड्य सर्वतः ॥
दशपूर्वायता रेखा दश चैवोत्तरायताः ।
सर्ववास्तुविभागेषु विज्ञेया नवका नव ॥

1 म. पु., p. 521, तिक्ता कषाया च तथा वैश्यशूद्रेषु शस्यते

2 *Ibid*, अरत्निमात्रे वै गर्त्ते

3 I. O. omits this and the two following lines.

4 वी. मि., p. 221, पश्चाल्लेख्येन वा लिप्त्वा

## ( देवपूजनम् )

एकाशीतिपदं[1] कृत्वा वास्तुवित् सर्ववास्तुषु ।
पदस्थान् पूजयेद्देवान् त्रिंशत् पञ्चदशैव तु ॥
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चाऽन्तस्त्रयोदश ।
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत ॥
ईशानकोणादिषु तान् पूजयेच्च विधानतः ।
शिखी चैवाऽथ पर्जन्यो जयन्तः कुलिशायुधः ॥
सूर्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ।
पूषा च वितथश्चैव गृहक्षतयमावुभौ ॥
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा ।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ॥
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च ।
भल्लाटः[2] सोमसूर्यौ च अदितिश्च दितिस्तथा ॥
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ।
ईशानादिचतुष्कोणे संस्थितान् पूजयेद्बुधः ॥
आपश्चैवाऽथ सावित्रो जयो रुद्रस्तथैव च ।
मध्ये[3] चतुष्पदो ब्रह्मा तस्याऽप्यष्टौ समीपगाः ॥
सर्वानेकान्तरान्विद्यात्पूर्वाद्यान्नामतः शृणु ।
अर्यमा सविता चैव विवस्वान्विबुधाधिपः ॥
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ।

1 Lacuna here in A. S. B.
2 म. पु., p. 521, भल्लटः सोमसर्पौ च
3 *Ibid*, मध्ये नवपदे ब्रह्मा

अष्टमश्चाऽपवत्सस्तु परितो ब्रह्मणः स्मृताः ॥
आपश्चैवाऽपवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ।
पदिकानां च वर्गोऽयमेवं कोणेष्वशेषतः ॥
तन्मध्ये तु बहिर्वत्सद्विपदास्ते तु सर्वतः ।
वंशानिदानीं वक्ष्यामि रज्जूनपि पृथक् पृथक्[1] ॥
वायुं यावत्तथा रोगात्पितृभ्यः शिखिनं पुरः[2] ।
मुख्याद्भृशं तथा शेषाद्वितथं यावदेव तु ॥
सुग्रीवाददितिं[3] यावन्मृगात्पर्जन्यमेव च ।
एते वंशाः समाख्याताः क्वचिद्रज्जव एव तु ॥
एतेषां यस्तु सम्पातः पदं मध्यं समं तथा ।
मर्म चैतत्समाख्यातं त्रिशूलं कोणगं च यत् ॥
स्तम्भन्यासेषु वर्ज्यानि तुलाविधिषु सर्वदा ।
कीलकुड्योपघातादि वर्जयेद्यत्नतो नरः ॥
सर्वत्र वास्तुनिर्दिष्टः पितृवंशान्तरायतः ।
शिरस्यग्निः समाविष्टो मुखे चापः समाश्रितः ॥
पृथ्वीधरोऽर्यमा चैव [4]स्तनयोस्तावधिष्ठितौ ।
वक्षस्थले त्वापवत्सः पूजनीयः सदा बुधैः ॥
नेत्रयोर्दितिपर्जन्यौ श्रोत्रेऽदितिजयन्तकौ ।

1 म. पु., p. 521, श्रज्जूनपि प्रथक् प्रथक्

2 म. पु., and वी. मि., p. 222, पुनः for पुरः

3 Omission supplied by I. O., A. S. B. and वी. मि., p. 222

4 म. पु., p. 522, स्कन्धयोः for स्तनयोः

सर्प्पेन्द्रावंससंस्थौ तु पूजनीयौ प्रयत्नतः ॥
सत्यरोगादयस्तद्वद्बाह्वोः[1] पञ्च च पञ्च च ।
रुद्रश्च राजयक्ष्मा च वामहस्ते समास्थितौ ॥
सावित्रः सविता तद्वद्धस्तं दक्षिणमाश्रितौ ।
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ॥
पूषा च राजयक्ष्मा च हस्तयोर्मणिबन्धने ।
तथैवाऽऽसुरशोषौ तु वामपार्श्वे समाश्रितौ ॥
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः ।
ऊर्वोर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्वपुष्पकौ ॥
जङ्घयोर्भृगुसुग्रीवौ स्फिक्स्थो दौवारिको मृगः ।
जयः शक्रस्तथा मेढ्रे पादयोः पितरस्तथा ॥
मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते ।
चतुष्षष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः ॥
ब्रह्मा चतुष्पदस्तत्र कोणेष्वेकपदस्ततः[2] ।
बहिः कोणेषु चाऽष्टौ तु सार्द्धाश्चोभयतः स्थिताः ॥
विंशतिर्द्विपदास्तेषां चतुष्षष्टिपदास्मृताः ।
गृहारम्भे तु कण्डूतिः [3]स्वाम्यङ्गे यत्र जायते ॥
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ।
सशल्यं भयदं यस्मादशल्यं भयनाशनम्[4] ॥

1 म. पु., p. 522, सूर्यसोमादयः तद्वत्
2 म. पु., p. 522, कोणेष्वर्धपदास्तदा
3 वी. मि , p. 224, स्वस्याङ्गे
4 म. पु , p. 522, शुभदायकम्

हीनाधिकाङ्गतां वास्तोः सर्वथा परिवर्जयेत् ।
नगरग्रामदेशेषु सर्वत्रैवं प्रकल्पयेत् ॥

'शुभनिरीक्षितं' शुभग्रहनिरीक्षितम् । 'ऐन्दवं' मृगशिरः । 'दीप्तौ पूर्वादी'ति पूर्वां दिशमारभ्य प्रदक्षिणं सम्यक् वर्त्तिप्रदीपने ब्राह्मणादीनां वर्णानां यथासंख्यं सुखावहमित्यर्थः । 'खातपूरणैः' खातस्य गर्तस्य तैरेव सम्बन्धिभिः पूरणैः । 'पितृवंशान्तरायतः' पितृगणादारभ्य वह्निं यावद्यो वंशः प्रसारितः, तद्वदायतो वा वास्तुपुरुषः । 'अम्बुपो' जलाधिपः । 'पुष्पकः' पुष्पदन्तः । 'जयश्शक्र' इत्यत्र 'जय'शब्दः शक्रवाची । 'तद्वत्कोणेष्वेकपदा' इति । एकाशीतिपदे वास्तौ याः कोणेष्वेकपदा देवता इहाऽपि तास्तथैव बोद्धव्याः । 'बहिःकोणेषु चेत्यादि' प्रान्तकोणेषु चतुर्षु ये उभयपार्श्वे कोष्टकास्तेष्वष्टौ देवताः । 'सार्द्धा भवन्ति' देवताचतुष्टयसहिता भवन्तीत्यर्थः[1] ।

( चतुश्शालादिलक्षणम् )

चतुश्शालं त्रिशालं च द्विशालं चैकशालकम् ।
नामतस्तानि वक्ष्यामि स्वरूपेण द्विजोत्तमाः[2] ॥

सूत उवाच

चतुश्शालं प्रवक्ष्यामि स्वरूपान्नामतस्तथा[3] ।

1 The entire commentary is reproduced piecemeal after each *s'loka* by वी. मि., pp. 219–226

2 Though all Mss. put this *s'loka* befor the commentary, its proper place is after it.

3 म. पु., ch. 254 ( p. 522 ); वी. मि., p. 224

चतुश्शालं चतुर्द्वारैरलिन्दैः सर्वतो वृतम् ॥
नाम्ना तत्सर्वतो भद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनं तु नन्द्यावर्त्तं प्रचक्षते ॥
दक्षिणद्वारहीनन्तु [ वर्धमानमुदाहृतम् ।
पूर्वद्वारविहीनं तु[1] ] स्वस्तिकं नाम विश्रुतम् ॥
रुचकं चोत्तरद्वारविहीनं तु प्रचक्षते ।
सौम्यशालाविहीनं यत्त्रिशालं धन्यकं च तत् ॥
क्षेमवृद्धिकरं नृणां बहुपुत्रफलप्रदम् ।
शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम् ॥
धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् ।
चुल्ही तु याम्यया हीनं त्रिशालं शालया तु यत्[2] ॥
कुलक्षयकरं नृणां सर्वव्याधिभयावहम् ।
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तद्विदुः ॥
मित्रबन्धुसुतान्[3] हन्ति तथा सर्पभयावहम् ।
याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम् ॥
क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् ।
यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम् ॥
राजाग्निभयदं नृणां कुलक्षयकरं च तत् ।
उदक्पूर्वे तु शाले द्वे दण्डाख्यं तत्र तद्भवेत् ॥
अकालमृत्युभयदं परचक्रभयावहम् ।

1 [] Omission Udaipur Ms. supplied by I. O., A. S. B. and वी. मि., p. 224 ; confirmed by म. पु., p. 522

2 म. पु., p. 522, शालया याम्यया हीनं यद्विशालं तु शालया ।

3 वी. मि., p. 225 पितृ for मित्र ; म. पु., confirms the text.

चापाख्यं[1] याम्यपूर्वाभ्यां शालाभ्यां यद्द्विशालकम् ॥
विषशस्त्राग्निभयदं पराभवभयावहम् ।
चुल्ही पूर्वापराभ्यां च सा भवेन्मृत्युसूचनी ॥
विधवत्वाय च स्त्रीणामनेकभयकारकम् ।
कार्यमुत्तरयाम्याभ्यां[2] शालाभ्यां भयदं नृणाम् ॥
सिद्धार्थवर्ज्जं वर्ज्यानि द्विशालानि सदा बुधैः ॥

'अलिन्दं' द्वारचतुष्किका। 'सौम्यशाला' उत्तरद्वार-शाला। 'सिद्धार्थवर्ज्जं' याम्यात्पराभ्यां शालाभ्यां युक्तं यद्द्विशालं तद्विहाय[3]।

## ( राजादिगृहलक्षणम् )

अथाऽतः सम्प्रवक्ष्यामि भवनं पृथिवीपतेः।
पञ्चप्रकारं तत्प्रोक्तमुत्तमादिविभेदतः ॥
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः।
चतुर्ष्वन्येषु विस्तारो हीयते चाऽष्टभिः करैः ॥
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् ॥
षड्भिषड्भिस्तथाऽशीतिर्हीयते तत्र विस्तरात् ।
त्र्यंशेन चाऽधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥

1 वी. मि., p. 225 वायव्यं for चापाख्यं, a reading noted in म. पु., p. 523

2 Mss. read कार्च for कार्यम्

3 Reproduced by वी. मि., p. 225

सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम् ।
चतुष्षष्टिः सुविस्तारः षड्भिः षड्भिः प्रहीयते ॥
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाऽधिकं भवेत् ।
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ॥
चतुश्चतुर्विहीना स्यात्करषष्टिः प्रविस्तरे ।
अष्टांशेनाऽधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥
सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ।
चत्वारिंशत्तथाऽष्टौ च चतुर्भिर्हीयते क्रमात् ॥
[ चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते ।
शिल्पिनां कञ्चुकीनां च वैश्यानां गृहपञ्चकम् ॥
अष्टाविंशत्कराणां तद्द्विहीनं विस्तरात् क्रमात् ।
द्विगुणं दैर्घ्यमेवोक्तं मध्यमेष्वेवमेव तु ॥
दूतकर्मान्तिकादीनां वक्ष्ये भवनपञ्चकम्[1] । ]
चतुर्थांशाधिकं दैर्घ्यं विस्तारो द्वादशैव च ॥
अध्यर्द्धं करहानिः स्याद्विस्तरात्पञ्चसु क्रमात् ।
दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम् ॥
तेषामपि प्रवक्ष्यामि क्रमाद्भवनपञ्चकम् ।
चत्वारिंशत्प्रविस्ताराच्चतुर्भिर्हीयते क्रमात् ॥
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाऽधिकं भवेत् ।
चातुर्वर्ण्यस्य वक्ष्यामि सामान्यं गृहपञ्चकम् ॥
द्वात्रिंशद्वै कराणां तु चतुर्भिर्हीयते क्रमात् ।
आषोडशादिति परं न्यूनमन्त्यावसायिनाम् ॥

1 [ ] Omission in Udaipur Ms. only.

दशांशेनाऽष्टभागेन त्रिभागेनाऽथ भागिकम् ।
अधिकं दैर्घ्यमित्याहुः ब्राह्मणादेः प्रशस्यते ॥
सेनापतेर्नृपस्याऽपि चातुर्वर्ण्यस्य चाऽन्तरे[1] ।
वासाय च गृहं कार्यं राजपूज्येषु सर्वदा ॥
अन्तरा प्रभवानां च स्वपितुर्न्यूनमिष्यते[2] ।
तथा हस्तशतादर्वाग्गमितं वनवासिनाम् ॥
सेनापतेर्नृपस्याऽपि सप्तत्या सहितैर्हि ते ।
चतुर्दशहृते व्यासे शालान्यासः प्रकीर्तितः ॥
पञ्चत्रिंशोद्धृते तस्मिन् अलिन्दः समुदाहृतः ।
तथा षट्त्रिंशद्धस्ता तु सप्ताङ्गुलसमन्विता ॥
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ।
दशाङ्गुलाधिका तद्वत् क्षत्रियस्य विधीयते ॥
पञ्चत्रिंशत्करा वैश्ये अङ्गुलानि त्रयोदश ।
तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः ॥
शालायास्तु त्रिभागेन यस्याऽग्रे वीथिका भवेत् ।
सोष्णीषं नाम तद्वास्तु पश्चाच्छायाश्रयं भवेत् ॥
पार्श्वयोर्वीथिका यत्र सावष्टम्भं तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥
शुभदं सर्वमेतत्स्याच्चातुर्वर्ण्ये चतुर्विधम् ।
विस्तारात्षोडशो भागस्तथा हस्तचतुष्टयम् ॥
प्रथमो भूमिकोच्छ्रायः उपरिष्टात्प्रहीयते ।

1 म. पु., p. 523, प्रहयोरन्तरेण तु

2 *Ibid,* प्रहमिष्यते

द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयात् ॥
पक्वेष्टका भवेद्भित्तिः षडंशांशेन विस्तरात् ।
दारवैरपि कल्प्या स्यात्तथा मृण्मयभित्तिका ॥
गर्भमानेन मानं तु सर्व्ववास्तुषु शस्यते ।
गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः ॥
संयुतो द्वारविष्कम्भात् द्विगुणश्चोच्छ्रयो भवेत् ।
द्वारशाखासु बाहुल्यमुच्छ्रायकरसम्मितैः ॥
अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः ।
उदुम्बरोत्तमाङ्गं च तदध्यर्द्धप्रविस्तरात् ॥

'सेनापतेर्नृपस्याऽपि सप्तत्ये'त्यादि । सेनापतेर्नृपस्य गृहे यावान्विस्तार उक्तस्तं करसप्तत्या सहितं कृत्वा, तदर्द्धं गृहीत्वा तस्याऽर्द्धस्य चतुर्दशविभागं कृत्वा यावदवशिष्टं भवति तावद्विस्तारां शालां कुर्यादित्यर्थः । तेनाऽष्टोत्तरहस्तशतविस्तारे राजवेश्मनि पञ्चहस्तप्रमाणा शाला भवति । 'पञ्चत्रिंशोद्धृत' इति । तस्मिन्नेव नवाशीतिविस्तारे राजवेश्मनि पञ्चहस्तपञ्चत्रिंशता भागहारे कृते ये एकोनविंशतिहस्ता अवशिष्यन्ते तावानलिन्दः कर्तव्यः । 'उदुम्बरो' देहली[1] ।

( स्तम्भमानविनिर्णयः )

अथाऽतः सम्प्रवक्ष्यामि स्तम्भमानविनिर्णयम्[2] ।

1 The entire commentary is reproduced by वी. मि., pp. 227-228

2 म. पु. ch. 255, p. 524 ff.

तद्वास्तुभवनोच्छ्रायं सदा सप्तगुणं विदुः ॥
अशीत्यंशं पृथुत्वे स्यादग्रे नवगुणैः सह ।
रुचकश्चतुरस्रस्स्यादष्टास्रो वज्र उच्यते ॥
द्विवज्रषोडशास्रस्तु द्वात्रिंशास्रः प्रलीनकः ।
मध्यप्रदेशो यः स्तम्भो वृत्तो वृत्त इति स्मृतः ॥
एते पञ्च महास्तम्भाः प्रशस्ताः सर्ववास्तुषु ।
पद्मवल्लीलताकुम्भपत्रदर्पणभूषिताः ॥
स्तम्भस्य नवमांशेन पद्मकुम्भान्तराणि तु ।
स्तम्भतुल्या तुला प्रोक्ता हीना चोपतुला ततः ॥
त्रिभागेनेह सर्वत्र चतुर्भागेन वा पुनः ।
हीनं हीनं चतुर्थांशात्तथा सर्वासु भूमिषु ॥
सावरोहाणि[1] सर्वेषां प्रवेशो दक्षिणेन तु ॥

## ( द्वारविधिः )

द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह यानि तु ।
पूर्वेणेन्द्रं जयन्तं च द्वारं सर्वत्र शस्यते ॥
याम्यं च वितथं चैव दक्षिणेन विदुर्बुधाः ।
पश्चिमे पुष्पदन्तं तु वारुणं च प्रशस्यते ॥
उत्तरेण तु भल्लाटं सौम्यं तु सुखदं भवेत् ।
तथा वास्तुषु सर्वत्र वेधं द्वारस्य वर्जयेत् ॥
द्वारे तु रथ्यया विद्धे भवेत्सर्वकुलक्षयः ।
तरुणा दोषबाहुल्यं शोकः पङ्केन जायते ॥

1 म. पु., p. 524, वासगेहानि

अपस्मारो भवेन्नूनं कूपवेधेन सर्वदा ।
व्यथा प्रस्रवणेन स्यात्कीलेनाऽग्निभयं भवेत् ॥
विनाशो देवताविद्धे स्तम्भेन स्त्रीकृतो भवेत् ।
गृहभर्तुर्विनाशस्स्याद्गृहेण च गृहे कृते ॥
अमेध्यावस्करैर्विद्धे गृहिणी बन्धकी भवेत् ।
तत्र शस्त्रभयं विद्यादन्त्यजस्य गृहेण तु ॥
उच्छ्रायद्विगुणां भूमिं त्यक्त्वा वेधो न जायते ।
स्वयमुद्धाटिते द्वारे उन्मादो गृहवासिनाम् ॥
स्वयं च पिहिते विद्यात्कुलनाशं विचक्षणः ।
मानाधिके राजभयं न्यूने तस्करतो भयम् ॥
द्वारोपरि च यद्द्वारं तदन्तकभयं स्मृतम् ।
आध्मातं[1] मध्यदेशे तु अधिको यस्य विस्तरः ॥
वज्रं तु सङ्कटं मध्ये सद्यो भर्तृविनाशनम् ।
तथाऽन्यपीडितं द्वारं बहुदोषकरं भवेत् ॥
मूलद्वारात्तथाऽत्यन्तं नाऽधिकं शोभया भवेत् ।
कुम्भश्रीपर्णवल्लीभिः मूलद्वारं तु शोभयेत् ॥
पूजयेच्चाऽपि तन्नित्यं बलिना चाक्षतोदकैः ॥

### ( गृहे वृक्षारोपणविधिः )

भवनस्य वटः पूर्वे दिग्भागे सार्वकामिकः ।
उदुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥

1 म. पु., p. 525, अध्वनो मध्यदेशे तु

प्लक्षश्चोत्तरतो धन्यो विपरीतास्त्वसिद्धये ।
कण्टकी क्षीरवृक्षश्च आसन्नः सफलद्रुमः ॥
भार्याहानिः प्रजाहानिः भवेतां क्रमशः सदा ।
न छिन्द्याद्यदि तान् वृक्षान् अन्तरे स्थापयेच्छुभान् ॥
पुन्नागाशोकतिलकशमीवकुलचम्पकान् ।
दाडिमीं पिप्पलीं द्राक्षां तथा कुसुममण्डपान् ॥

जम्बीरपूगपनसद्रुमकेतकीभिः
जातीसरोजशतपत्रिकमल्लिकाभिः ।
यन्नालिकेरकदलीदलपाटलाभिः
युक्तं तदत्र भवनं श्रियमातनोति ॥

'रथ्या' मार्गः । 'वेधो'ऽत्राभिमुख्येनाऽवस्थानम् । 'उच्छ्रायद्विगुणमि'ति । यावान् द्वारस्योच्छ्रायो दैर्घ्यं तद्द्विगुणं द्वाराग्रभूमेः परतो यद्येते रथ्यादयो भवन्ति, तदा न वेधो वास्तुवेध इत्यर्थः[1] ।

सूत उवाच[2]

उदगादिप्लवं वास्तोः समानस्य शिरस्तथा ।
परीक्ष्य पूर्ववत् कुर्यात् स्तम्भोच्छ्रायं विचक्षणः ॥

'समानस्य' मानसहितस्य वास्तुपुरुषस्य[3] ।

1 The whole passage, including the prose comments, is reproduced by वी. मि., pp. 227–229

2 म. पु., ch. 256, p. 525 ff.

3 वी. मि., p. 231

न देवपूर्तसविधे चत्वराणां समीपतः ।
कारयेद्भवनं प्राज्ञो दुःखशोकसमन्वितम् ॥

## ( गृहप्रवेशविधिः )

तस्य प्रवेशाश्चत्वारस्तस्योत्सङ्गाग्रतः शुभाः ।
पृष्ठतः पृष्ठतो गन्तुं सव्यावर्तं प्रशस्यते ॥
अपसव्यो विनाशाय दक्षिणे शीर्णकस्तथा ।
सर्वकामफलो नृणां सम्पूर्णो नाम वामतः ॥
एवं प्रवेशमालोच्य यत्नेन गृहमारभेत् ।
अथ सांवत्सरप्रोक्ते मुहूर्ते शुभलक्षणे ॥
रत्नोपरिशिलां कृत्वा सर्वबीजसमन्विताम् ।
चतुर्भिर्ब्राह्मणैस्स्तम्भं वस्त्रालङ्कारपूजितम् ॥
शुक्लाम्बरधरः शिल्पी सहितो वेदपारगैः ।
स्नापितं तन्न्यसेत्तद्वत्सर्वौषधिसमन्वितम् ॥
नानाक्षतसमोपेतं वस्त्राभरणसंयुतम् ।
ब्रह्मघोषेण वाद्येन गीतमङ्गलनिस्स्वनैः ॥
प्रदोषे भोजयेद्विप्रान् होमस्तु मधुसर्पिषा ।
"वास्तोष्पते प्रतिजानीहि"[1] मन्त्रेणाऽनेन सर्वदा ॥
सूत्रपाते तथा कार्यमेवं स्तम्भोच्छ्रये पुनः ।

1 ऋ. सं., V, 4, 21:

वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवो भवानः ।
यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥

द्वारवंशोच्छ्रये तद्वत्प्रवेशसमये तथा ॥
वास्तूपशमने तद्वद्वास्तुयज्ञस्तु पञ्चधा ।
ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम् ॥
प्रदक्षिणं च कुर्वीत वास्तोष्पन्दविलेखनम् ।
तर्जनी मध्यमा चैव तथाऽङ्गुष्ठस्तु दक्षिणे ॥
प्रवालरत्नकनकं फलमृष्टाक्षतोदकम् ।
सर्ववास्तुविभागेषु शस्तं पदविलेखनम्[1] ॥
न भस्माङ्गारकाष्ठेन न शस्त्रनखचर्मभिः ।
न शृङ्गास्थिकपालैश्च क्वचिद्वास्तु विलेखयेत् ॥
एभिर्विलेखितं कुर्यात् दुःखशोकभयादिकम् ।
यदा गृहप्रवेशः स्याच्छिल्पी तत्राऽभिलक्षयेत् ॥
स्तम्भसूत्रादिकं तद्वच्छुभाशुभफलोदयम् ।
आदित्याभिमुखं रौति शकुनिः परुषं यदि ॥
तुल्यकालं स्पृशेदङ्गं गृहभर्त्ता यदात्मनः ।
वास्त्वङ्गे तद्विजानीयान्नरः शल्यं भयप्रदम् ॥
शकुनानन्तरं यत्र हस्त्यश्वश्वापदं भवेत् ।
तदङ्गसम्भवं विद्यात्तत्र शल्यं विचक्षणः ॥
प्रसार्यमाणे सूत्रे तु श्वगोमायुविलङ्घिते ।
तत्र शल्यं विजानीयात् खरशब्दे च भैरवे[2] ॥

1 म. पु., p. 525 and वी. मि., p. 232 read more correctly पदविलेखने

2 This is an exception to the general rule that this braying of a donkey is a good omen.

यदीशाने[1] तु दिग्भागे मधुरं रौति वायसः ।
धनं तत्र विजानीयाद्भागे वा स्वाम्यधिष्ठिते[2] ॥
सूत्रच्छेदे भवेन्मृत्युर्व्याधिः कीले त्वधोमुखे ।
अङ्गारेषु तथोन्मादं कपालेषु च सम्भ्रमम् ॥
कण्ठशल्येषु जानीयात्पौंश्चल्यं स्त्रीषु शास्त्रवित् ।
गृहकर्तुर्गृहस्याऽपि विनाशः शिल्पिसम्भ्रमे ॥
स्तम्भस्कन्धाच्युते कुम्भे शिरोरोगान्विनिर्दिशेत् ।
कुम्भापहारे सर्वस्य कुलस्याऽपि क्षयो भवेत् ॥
मृत्युस्थानच्युते कुम्भे भग्ने बन्धं विदुर्बुधाः ।
करसंस्था विनाशे तु नाशं गृहपतेर्विदुः ॥
बीजौषधिविहीने तु भूतेभ्यो भयमादिशेत् ।
प्राग्दक्षिणेन विन्यस्य स्तम्भे छत्रं निवेशयेत् ॥
ततः प्रदक्षिणेनाऽन्यान् न्यसेत् स्तम्भान्विचक्षणः ।
यस्माद्भयङ्करा नॄणां योजितास्त्वप्रदक्षिणाः ॥
रक्षां कुर्वीत यत्नेन स्तम्भोपद्रवनाशिनी ।
तथा फलवतीं शाखां स्तम्भोपरि निवेशयेत् ॥
प्रागुदक्प्रवणं कुर्याद्दिङ्मूढं तु न कारयेत् ।
स्तम्भं वा भवनं चाऽपि द्वारं वासगृहं तथा ॥
दिङ्मूढे कुलनाशः स्यान्न च संवर्द्धते गृहम् ।
यदि संवर्द्धयेद्गेहं सर्वमेव विवर्जयेत् ॥

1 वी. मि., p. 232 has शाके ( 'east' )

2 Fifteen ślokas from this are omitted in I. O.

पूर्वेण वर्द्धितं वास्तु कुर्याद्वैराणि सर्वदा ।
दक्षिणे वर्द्धितं वास्तु मृत्यवे स्यान्न संशयः ॥
पश्चाद्विवृद्धं यद्वास्तु तदर्थक्षयकारकम् ।
वर्द्धापितं तथा सौम्ये बहुसन्तापकारकम् ॥
आग्नेये यत्र वृद्धिस्स्यात्तदग्निभयदं भवेत् ।
वर्द्धितं राक्षसे कोणे [1]वित्तक्षयकरं भवेत् ॥
वर्द्धापितं तु वायव्ये वातव्याधिप्रकोपकृत् ।
ईशाने सस्यहानिः[2] स्याद्वास्तौ संवर्द्धिते सदा ॥
ईशाने देवतागारं तथा शान्तिगृहं भवेत् ।
महानसं तथाऽऽग्नेये तत्पार्श्वे चोत्तरे जलम् ॥
गृहस्योपस्करं सर्वं नैर्ऋते स्थापयेद्बुधः ।
वर्चस्थानं बहिः कुर्यात्स्नानमण्डपमेव च ॥
धनधान्यं च वायव्ये कर्मशाला ततो बहिः ।
एवं वास्तुनिवेशः स्याद्गृहभर्तुः शुभावहः ॥

## ( दार्वाहरणविधिः )

अथाऽतः सम्प्रवक्ष्यामि दार्वाहरणमुत्तमम्[3] ।
धनिष्ठापञ्चकं मुक्त्वा विष्ट्यादिकमतः परम् ॥
ततः सांवत्सरादिष्टे दिने यायाद्वनं बुधः ।
प्रथमं बलिपूजां च कुर्याद्वृक्षाय सर्वथा ॥

1 म. पु., p. 526, शिशुक्षयकरं भवेत्

2 म. पु., p. 526, ईशान्यां अन्नहानिस्स्यात्

3 म. पु., ch. 257, p. 527 ff.

पूर्वोत्तरेण पतितं गृहदारु प्रशस्यते ।
अन्यथा न शुभं विद्याद्याम्यापरनिपातने ॥
क्षीरवृक्षोद्भवं दारु न गृहे विनिवेशयेत् ।
कृताधिवासं विहगैरनलानिलपीडितम् ॥
गजावभग्नं च तथा विद्युन्निर्घातपीडितम् ।
ऊर्ध्वशुष्कं तथा दारु भग्नं वक्रं तथैव च ॥
चैत्यदेवालयोत्पन्नं नदीसङ्गमजं तथा ।
श्मशानकूपनिलयं तडागादिसमुद्भवम् ॥
वर्जयेत्सर्वदा दारु यदीच्छेद्विपुलां श्रियम् ।
तथा कण्टकिनो वृक्षान्नीपनिम्बविभीतकान् ॥
श्लेष्मातकासारतरून् वर्जयेद्गृहकर्मणि ।
असनाशोकमधुकसर्जसालाः शुभावहाः ॥
चन्दनं पनसं धन्याः सुरदारुहरिद्रकाः ।
द्वाभ्यामेकेन वा कुर्यात्त्रिभिर्वा भवनं शुभम् ॥
बहुभिः कारितं यस्मादनेकभयदं भवेत् ।
एकैव शिंशपा धन्या श्रीपर्णी तिन्दुकी तथा ॥
एते नाऽन्यसमायुक्ताः कदाचिच्छुभदायकाः ।
स्यन्दनः पनसस्तद्वत्सरलार्जुनपद्मकाः ॥
एते नाऽन्यसमायुक्ताः वास्तुकार्ये शुभप्रदाः ।
तरुच्छेदे तथा पीते गोधां विद्यात् विचक्षणः ॥
माञ्जिष्ठवर्णे भेकः स्यान्नीले सर्पं विनिर्दिशेत् ।
अरुणे सरटं विद्यान्मुद्गाभे शुकमादिशेत् ॥
कपिले मूषिकां विद्यात्खड्गाभे जलमादिशेत् ।

एवंविधं समग्रं तु वर्जयेद्वास्तुकर्मणि ।
पूर्वच्छिन्नं तु गृह्णीयान्निमित्तशकुनैः शुभैः ॥

( ध्वजलक्षणम् )

व्यासेन गुणिते दैर्घ्ये अष्टभिर्वै हृते तथा ।
यच्छेषमायं तं विद्यादष्टभेदं वदामि वः ॥
ध्वजो धूमश्च सिंहश्च श्वा वृषः खर एव च ।
गजो ध्वाङ्क्षश्च पूर्वाद्याः करशेषा भवन्त्यमी ॥
ध्वजः सर्वमुखो धन्यः प्रत्यग्द्वारो विशेषतः ।
उदङ्मुखो भवेत्सिंहः प्राङ्मुखो वृषभो भवेत् ॥
दक्षिणाभिमुखो हस्ती सप्तभिः समुदाहृतः ।
एकेन ध्वज उद्दिष्टस्त्रिभिः सिंहः प्रकीर्तितः ॥
पञ्चभिर्वृषभः प्रोक्तो विकोणस्थांश्च वर्जयेत् ।
तमेवाऽष्टगुणं कृत्वा करराशिं विचक्षणः ॥
सप्तविंशाहृते भागे दक्षं[1] विद्याद्विचक्षणः ।
अष्टभिर्भाजयेच्छेषं यच्छेषं स व्ययो मतः ॥
व्ययाधिक्यं न कुर्वीत यतो दोषकरं भवेत् ।
आयाधिके भवेच्छान्तिरित्याह भगवान् हरिः ॥

कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं
दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्वा हिरण्यवसनानि तथा द्विजेभ्यो
मङ्गल्यशान्तिनिलयाय गृहं विशेत ॥

1 म. पु., p. 527, ऋक्षं for दक्षम्

गृह्योक्तहोमविधिना बलिकर्म कुर्यात्
प्रासादवास्तुशमने च विधिर्य उक्तः ।
सन्तर्प्पयेद्द्विजवरानथ भक्ष्यभोज्यैः
शुक्लाम्बरश्च भवनं प्रविशेत्सधूपम् ॥

'द्वाभ्यामेकेन वे'ति । यदा अनेकजातीयैर्वृक्षैर्गृहं कुर्यात्तदा द्वाभ्यां त्रिभिर्वा, न पुनः चतुष्पञ्चजातीयप्रभृतिभिरित्यर्थः । 'सरटः' कृकलासः । 'मुद्गाभे' मुद्गसमानवर्णे । 'अश्मन्तकः' पाषाणः । 'खङ्गाभे' श्यामले । 'व्यासेन गुणिते दैर्घ्ये' इति । 'व्यासेन' विस्तारसंख्यया 'दैर्घ्ये गुणिते' आवर्त्तिते सति यावन्तो हस्ता भवन्ति तेष्वष्टकमष्टकं कृत्वा भागहारे कृते यदवशिष्यते स आयो भवति । स च ध्वजादिभेदेनाऽष्टधा भिद्यते । 'पूर्वाद्याः' पूर्वादिदिगष्टकावस्थिताः यथा क्रमेण । 'तमेव' पूर्वोक्तं व्यासगुणितं दैर्घ्यकरराशिम् । 'अष्टभिर्भाजिते दक्षे' अष्टभिर्भागैर्हृते नक्षत्रस्य हृते करसमूहे ।

बह्वृचगृह्ये[1]

अथाऽतो वास्तुपरीक्षाऽनूषरमविवदिष्णुभूमौषधिवनस्पतिवत् यस्मिन् कुशवीरणं प्रभूतं कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेत् । अपामार्गः शाकस्तिल्वकः परिव्याध इति चैतानि यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शमनीयं परीत्य प्राच्यः स्यन्देरन् अप्रपतत्यस्तत्सर्वं समृद्धं समवस्रवे भक्तशरणं कारयेत् । बह्वन्नं

1 आश्वलायनगृह्यसूत्र., II , 7-9

हि भवति दक्षिणाप्रवणे सभां मापयेत्। साऽद्यूताह ? भवति युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति यत्र सर्वत आयः प्रस्यन्देरन् सा स्वस्त्ययिन्यद्यूता च।

अथैतैर्वास्तु परीक्षेत । जानुमात्रं गर्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत्। अधिके प्रशस्तं समे वार्त्तं न्यूने गर्हितं अस्तमितेऽपां पूर्णं परिवासयेत्। सोदके प्रशस्तं आर्द्रे वार्त्तं शुष्के गर्हितं श्वेतं मधुरास्वादं सिकतोत्करं ब्राह्मणस्य लोहितं क्षत्रियस्य पीतं वैश्यस्य तत्सहस्रसीतं कृत्वा यथादिक् समचतुरस्रं मापयेत् । आयतचतुरस्रं वा। तच्छमीशाखयौदुम्बरशाखया वा शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षत्यविच्छिन्नया चोदकधारया "आपो हिष्ठा मयो भुव" इति तृचेन। वंशान्तरेषु शरणानि कारयेद्गर्तेष्ववकाः शीपालमित्यवधापयेन्न हास्य दाहुको भवतीति विज्ञायते। मध्यमस्थूणाया गर्तेऽवधाय प्रागग्रोदगग्रान् कुशानास्तीर्य्य व्रीहियवमतीरप आसेचये "दच्युताय भौमाय स्वाहे" त्यथैनामुच्छ्रीयमाणामनुमन्त्रयेते "हैव तिष्ठ निमिता तिल्विलास्त्वामिरावतीं मध्ये पोषस्य तिष्ठतीं आ त्वा प्रापन्नघायवः।। आ त्वा कुमारस्तरुण आ वत्सो जा यतां सह। आ त्वा परिश्रितः कुम्भ आ दध्नः कलशैरय" इति।

वंशमाधीयमान "मृतेन स्थूणामधिरोह वंश द्राघीय आयुःप्रतरं दधाना"इति। सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापये"त्पृथिव्या अधिसम्भवेति अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया इरासुह प्रशंसत्यनिरामपबाधता"मिति वाऽथाऽस्मिन्नप आ सेचय"त्यैतु राजा वरुणो रेवतीभिः

अस्मिन् स्थाने तिष्ठतु मोदमानः इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशंत्वि"त्यथैतच्छमयति व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शंतातीयेन त्रिः प्रदक्षिणं परिव्रजन् प्रोक्षत्यविच्छिन्नया चोदकधारया "आपो हि ष्ठा मयो भुव" इति तृचेन। मध्येऽगारस्य स्थालीपाकं श्रपयित्वा "वास्तोष्पते प्रतिजानीह्यस्मानि"ति चतसृभिः प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणाय भोजयित्वा शिवं वास्तु शिवं वास्त्विति वाचयीत।

'अविवदिष्णु'यत्र विवदिष्णुर्विवदिता न विद्यते तत्। अविवादीरिति तु पाठे विवादरहितमित्यर्थः । 'भूमौषधिवनस्पतिवत्' बहुतरौषधिवनस्पत्युत्पत्तियोग्यम् । 'परिखाय' उत्पाद्य । 'परिव्याधो' राजवृक्षविशेषः । 'प्रदक्षिणं शयनीयं परीत्य' शयनगृहं प्रदक्षिणं यथा भवति तथा कृत्वा। 'प्रपतन्त्यः' प्रकर्षेण गच्छन्त्यः। 'सर्वसमृद्धं'सर्वैः पुत्रादिभिः सम्पूर्णम् । 'समवश्रवे'प्रणालिकादेशे । 'भक्तशरणं' पाकशाला।'सभा' गृहस्थस्य समाजशाला सा । यदि दक्षिणाप्रवणे देशे क्रियते तदा द्यूतवती भवत्यतो न तथा कार्येत्यर्थः। 'प्रमायुकाः' मरणशीलाः। 'वार्त्त'नाऽत्युत्कृष्टं नाऽपकृष्टमित्यर्थः। 'सहस्रसीतं' अपरिमितकृष्टं। 'शंतातीयेन' "शन्न इन्द्राग्नी भवतेति"सूक्तेन। 'अवकाः' शम्बुकाः। 'शीपालाः' शैवालाः ॥

इति वास्तुकर्मविधिः ॥

1 Reproduced *verbatim* by वी. मि., pp. 234—236

2 ऋ. सं., V, 3, 28–30

७

# अथ राष्ट्रसंग्रहणम्

तत्र मनुः[1]

राष्ट्रस्य सङ्ग्रहे नित्यं विधानमिदमाचरेत् ।
सुसङ्गृहीतराष्ट्रे हि पार्थिवः सुखमेधते ॥
द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममवस्थितम् ।
तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य गुप्तये ॥
ग्रामस्याऽधिपतिं कुर्याद्दशग्रामाधिपं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥

'द्वयोः' ग्रामयोरित्यन्वयः । 'गुल्मः' पदातिसमूहः ।

आपस्तम्बः[2]

ग्रामेषु नगरेषु चाऽऽर्यान् शुचीन् सत्यशीलान् प्रजा-गुप्तये निदध्यात्[3] । तेषां पुरुषास्तथागुणा एव स्युः । सर्वतो-योजनं नगरं तस्करेभ्यो रक्ष्यम् । क्रोशो ग्रामेभ्यः ॥

1 VII, 113–115 ; cf. वी. मि., p. 248, 'सङ्ग्रहो' रक्षास्थानम् ( वी. मि., ); 'सुसंगृहीतं' रक्षाविधानेन वशीकृतं परिपालितं वा येन स्वराष्ट्रं स पार्थिवः सुखमेधते ।" ( मेधातिथिभाष्य ) 'गुल्मो' रक्षितृ-पुरुषसमूहः । ( मेधा )

2 2, 26, 4–7

3 'निदध्यात्' नियुञ्जीत । तेषां नियुक्तानां ये पुरुषाः तेऽपि 'तथागुणाः' आर्यादिगुणा एव स्युः । 'सर्वतः' सर्वासु दिक्षु । 'रक्ष्यं' रक्षणीयम् । ( हरदत्तव्याख्या., p, 286 )

मनुः[1]

तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥
नगरे नगरे चैव कुर्यात्सर्वार्थचिन्तकम् ।
उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥
स तानुपरिक्रामेत्सर्वानायुक्तकान् स्वयम् ।
तेषां वृत्ते परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥

[ तथा ]

ग्रामदोषान् समुत्पन्नान् ग्रामिकःशनकैस्स्वयम्[2] ।
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनै ॥
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत् ।
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥
एवं सर्वं विधायेदमिति कर्तव्यमात्मनः[3] ।
युक्तश्चैवाऽप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥
यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः[4] ।

1 VII, 120. 122, cf. वी. मि., p. 248; I. O. omits this passage from Manu. 'पृथक्कार्याणि' परस्परकलहादीनि । ( वी. मि., ) 'उच्चैस्थानं' कुलादिना महान्तम् । 'घोररूपं' भयानकम् ( वी. मि., ) प्रतापवन्तम् ( मेधा ) । 'अनुपरिक्रामेत्' सबलेन पूरयेत् । (मेधा) 'परिणयेत्' परिजानीयात् (मेधा) प्रापयेत् (वी. मि., )

2 VII, 116–117

3 VII, 142 ; 'बुध्यस्खलनमप्रमत्ता' ( मेधा. )

4 VII, 118–119, यानि राज्ञे प्रदेयानि अन्नादीनि तानि वृत्यर्थं ग्रामाधिपतिः गृह्णीयात्, न तु आब्दिकं करम् ।आब्दिकं तु करमाप्तद्वारा राजैव

अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥
दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च[1] ।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥

'अनुपरिक्रमेत्' यदा न्यायिभिस्ते नियुक्ता अभिभूयन्ते, तदा तान् स्वबलेन पूरयेदित्यर्थः । 'परिणयेत्' प्रापयेत् । कुलं ग्रामैकदेशः पाटकाख्यः[2] ।

विष्णुः[3]

ग्रामदोषाणां ग्रामाध्यक्षः परिहारं कुर्यात् । अशक्तो देशाध्यक्षाय निवेदयेत् । सोऽप्यशक्तो देशाध्यक्षाय । देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् ॥

शङ्खलिखितौ

वाहनयोधानां सततमन्वीक्षणम् । प्रतिमासं द्विसौववर्णिकी वृत्तिः । षाण्मास्यस्मरणं चातुर्मास्यं वा । स्वयाते-

गृह्णीयात् । तदुक्तं विष्णुधर्मोत्तरे : "सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिमि"ति । ( वी. मि., p. 251 )

1 This śloka is attributed by वी. मि., p. 251, to विष्णुधर्मोत्तर

2 वी. मि., p. 251 observes "कुलं ग्रामैकदेशः पादुकाख्य इति कल्पतरुः"

3 3, 12–15; the passages from विष्णु and शङ्खलिखित are omitted by I. O. but are reproduced in वी. मि., p. 251 ; A. S. B. omits the first two sentences of the passage from विष्णु

षु दानमनुक्रोशः विदितेष्वनुप्रदानं कुलचारित्रशीलविद्या-
लक्षणाधिकेषु सम्मानं प्रयुञ्जीत ।

'स्वर्यातेषु दानमि'त्यादि । राजकार्येण मृतेषु योधेषु तत्पुत्रादिभ्यो दानं दया च राज्ञा विधातव्या । [1]प्रसिद्धेषु तु योधेषु दानवेतनादधिकमपि वस्त्रादि देयमित्यर्थः ।

मनुः[2]

राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च ।
प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥
पणा देयाऽवकृष्टस्य षड् तूत्कृष्टस्य भक्तकम् ।
षाण्मासिकस्तथाऽऽच्छादो धान्यद्रोणस्तु मासिकः[3] ॥

'षड् पणा' इत्यन्वयः । 'आच्छादः' आच्छादनवस्त्रम् ।

बृहस्पतिः[3]

गुणवानिति यः प्रोक्तः ख्यापितो जनसंसदि ।
कथं तेनैव वक्रेण निर्गुणः परिकथ्यते ॥
तस्मात्प्रभुत्वं वृत्तिं च निर्दोषस्य न चालयेत् ।
अनवस्था प्रसङ्गस्स्यान्नश्येतोपग्रहस्तथा ॥

'उपग्रहः' परिग्रहः ।

1 'स्वर्यातेषु' मृतेषु । 'विदितेषु' युद्धादौ कृतकार्यतया प्रसिद्धेषु ( वी. मि., p. 252 )

2 VII, 125–126

3 वी. मि., p 252 : 'द्रोणः' आढकचतुष्टयम्

सम्यङ्निविष्टदेशस्तु कृतदुर्गस्तु शास्त्रतः ।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥

राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥

'निर्दाता' लविता[1] । 'कक्षं' तृणम् ।

याज्ञवल्क्यः[2]

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत्कायस्थेभ्यो विशेषतः[3] ॥

मनुः[4]

मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते स्वाम्याज्जीविताच्च सबान्धवः ॥

शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥

1 वी. मि., p. 253 adds "'निर्दाता' प्ररुढक्षेत्रमध्यस्थिततृणादिलविता ।

2 I, 336

3 मिताक्षरा reads कायस्थैः and explains : 'कायस्थाः' लेखकाः गणकाश्च । तेषां राजवल्लभतया अतिमायाविकत्वाच्च दुर्निवारत्वात् ।
Aparārka equates कायस्थाः with कराधिकृताः

4 VII, 111-112

**कात्यायनः**[1]

श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥
अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम् ।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता ॥
यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः[2] ॥

**मनुः**[3]

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्याऽस्य यथान्यायं कर्तव्यं परिरक्षणम् ॥

'ब्राह्मं संस्कारं' ब्राह्मणेन क्रियमाणमभिषेकमित्यर्थः[4] ।

1 Not found in Kane's कात्यायन

2 *Ibid*, V, 14

3 VII, 2

4 'ब्रह्म' वेदः । तत्कृतसंस्कारो 'ब्राह्मः' । उपनयनन्तु ब्रह्मग्रहणार्थत्वात् ब्राह्ममिति युक्तम् । गर्भाधानादिस्मृतिशास्त्रदृष्टचत्वारिंशत्संस्कारान् । एतेन क्षत्रिय एव राज्याधिकारीति सूचितम् । क्षत्रियाभावे तदतिदेशोऽपि ग्राह्यः । अन्यथा प्रजालोपस्स्यादिति भावः । 'सर्वस्य' करदस्य दीनानाथेश्च । 'अस्य' इति स्वविषयवासिनां यथास्वं जनपदपुरनिर्देशः । 'यथान्यायं' न्यायः शास्त्रं धर्मशास्त्ररूपं नार्थशास्त्रं औशानसादि प्रणीतम् । दुःखत्राणे 'परिरक्षा' । शास्त्रातिक्रमे चाऽदृष्टं दुःखम् ॥ ( मेधातिथिः )

कात्यायनः[1]

प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥

बृहस्पतिः

तत्प्रजापालनं प्रोक्तं त्रिविधं न्यायवेदिभिः ।
परचक्राच्चौरभयाद्बलिनोऽन्यायवेदिनः ॥

परानीकस्तेन भयमुपायैः शमयेन्नृपः ।
बलवत्परिभूतानां प्रत्यहं न्यायदर्शनैः ॥

रक्षन् धर्मेण भूतानि राजवध्यांश्च घातयन् ।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥

यदधीते यद्यजते यज्जुहोति यदर्चति ।
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥

शंखः[2]

न व्रतैर्नोपवासेन न च यज्ञैः पृथग्विधैः ।
राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात् ॥

यमः[3]

वानप्रस्थाः परिव्राजः श्रोत्रियाश्चाऽऽहिताग्नयः ।
षड्भागस्य प्रदातारो नैते राज्ञो हिरण्यदाः ॥

'षड्भागस्य' पुण्यषड्भागस्य ।

1 Kane, v. 15 ; वी. मि., p. 254

2 वी. मि., p. 255

3 वी. मि., p. 255

मनुः[1]

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षणात् ।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥

योऽरक्षन् बलिमादत्ते करशुल्कं च पार्थिवः ।
प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ॥

अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रमलहारकम् ॥

अनपेक्षितमर्यादं नास्तिकं विप्रलोपकम् ।
अरक्षितारम(त्तारं) नृपं विद्यादधोगतिम् ॥

यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः[2] ॥

'विप्रलोपकं' विच्छेदकं वृत्त्यादीनामिति शेषः । 'अ-त्तारं' भोक्तारम्[3] ।

इति राष्ट्रसङ्ग्रहणम् ॥

1 VIII, 304, 307, 308, 309.

2 Not found in printed copies of मनुस्मृति

3 Reproduced by वी. मि., p. 255

# अथ कोशः

तत्र महाभारते[1]

अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत् ।
सर्वं बलवतः पथ्यं सर्वं तरति कोशवान् ॥
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्राऽपि लोकस्य विनाऽर्थेन न सिध्यति ॥
नाऽधनो धर्मकार्याणि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादिव महत्सरः ॥
अधनेनाऽर्थकामेन चेतुं धर्मो न शक्यते ।
अर्थैरर्थाः निबध्यन्ते गजैरिव महागजाः ॥
अर्थेभ्यो हि प्रवृद्धेभ्यः सम्भृतेभ्य इतस्ततः ।
क्रियाः सर्वाः प्रवर्त्तन्ते पर्वतेभ्यः इवाऽऽपगाः ॥
कोशाक्षपटलं यस्य कोशवृद्धिकरैर्नरैः ।
पात्रभूतैश्च सततं धार्यते स नृपोत्तमः ॥
यो राजकोशं नश्यन्तमाचक्षीत नराधिपे ।
श्रोतव्यं तस्य च रहो रक्ष्यश्चाऽमात्यतो भवेत् ॥

'चेतुं' सञ्चेतुम्[2] ।

1 वी. मि., p. 257 prefixes to this passage from महाभारत twenty ślokas from विष्णुधर्मोत्तर.

2 Borrowed by वी. मि., p. 259

मनुः[1]

क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजो दापयेत्करान्[2] ॥
यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम् ।
तथा वीक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान्[3] ॥
यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः[4] ।
तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः ॥
पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।
धान्यानामष्टमो भागः षष्ठो द्वादश एव च ॥
आदद्याच्चाऽथ षड्भागं द्रुमांसमधुसर्पिषाम्[5] ।
गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥

1 VII, 127-132

2 "कियता मूल्येन क्रीतमेतत्, कियच्च विक्रीणीयमानं ? लभते, कियता च कालेन विक्रीयते, कियत् प्रतिभावेन नश्यति, अथ न, इत्येवमादिरूपक्रयविक्रयपरीक्षा । 'अध्वानं' चिराचिरगमनप्राप्यतां, 'भक्तं' ओदनादिमूलम्, 'परिव्ययः' तदुकरपणं सर्पिस्सूपशाकादि धनादि च । 'योगक्षेमं' अरण्ये कान्तारे वा गच्छतः राजभयं चोरभयं निश्चौरता वा इत्यादि । एतदपेक्ष्य वणिग्भ्यः करा आदातव्याः" । (मेधातिथिः) Both मेधा., and वी.मि., p. 260 suggest the reading वणिग्भिः for वणिजः

3 'क्षीणकृषेः न्यूनः करो गृहीतव्यः इत्येवमर्थमेतत्' । (मेधा.,)

4 'वार्योकौसः' जलौकसः । 'षट्पदाः' भ्रमराः । यथा ते स्वल्पमाददानाः परिपुष्टा भवन्ति तथा राज्ञा मूलोच्छेदो न कर्तव्यः । (मेधातिथिः)

5 Printed text and वी. मि., p. 261, read आददीत च

पत्रशाकतृणानां च कर्मणां वैणवस्य च[1]।
मृण्मयानां च भाण्डानां सर्वस्याऽश्ममयस्य च[2] ॥

तथा[3]

चतुर्थमाददानो हि क्षत्रियो भागमापदि।
प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥
स्वधर्मो विजये तस्य न भये स्यात्पराङ्मुखः।
शस्त्रेण वैश्यान्रक्षित्वा धर्म्यमाहारयेद्बलिम् ॥

धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम्[4]।
कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ॥

'अदन्ति' भक्षयन्ति। 'आद्यं' भक्षणीयम्। 'वार्योकसः' जलौकसः। 'द्रु' शब्देन वृक्ष उच्यते। 'आपदि' कोशशून्यत्वे[5]।

बृहस्पतिः[6]

दशाष्टषष्ठं नृपतेर्भागं दद्यात्कृषीवलः।
खिलाद्वर्षाद्वसन्ताच्च कृष्यमाणाद्यथाक्रमम् ॥

1 मेधातिथि reads चर्मणां वैदलस्य च

2 विष्णुधर्मोत्तर has the identical passage as *Manu samhita*, and both are cited by वी. मि., p. 261

3 X, 118–120

4 Up to the last kārśapāṇa.

5 वी. मि., p. 260

6 *Ibid*,

देशस्थित्या बलिं दद्युर्भूतं षण्मासवार्षिकम् ।
एष धर्मः समाख्यातः कीनाशानां पुरातनः ॥

'भूतं' यथाव्यवस्थितम् । 'कीनाशः' कृषीवलः ।

विष्णुः[1]

[2]प्रजाभ्यो बल्यर्थं [ संवत्सरेण ] धान्यतः षष्ठमंशमादद्यात् । सर्वसस्येभ्यश्च द्विकं शतं पशुहिरण्ययोर्वस्त्रेभ्यश्च । मांसमधुघृतौषधिगन्धपुष्पमूलरसशाकपत्राजिनमृद्भाण्डाश्मभाण्डवैणवेभ्यः । षष्ठभागं ब्राह्मणेभ्यः करादानं न कुर्यात् । ते हि राज्ञां धर्मकरदाः[3] ।

कात्यायनः[4]

भूस्वामी तु स्मृतो राजा नाऽन्यद्रव्यस्य सर्वदा ।
तत्फलस्य हि षड्भागं प्राप्नुयान्नाऽन्यथैव तु[5] ॥
भूतानां तन्निवासित्वात्स्वामित्वं तेन कीर्तितम् ।
तत्क्रियाबलिषड्भागं शुभाशुभनिमित्तजम् ॥

1 3, 22–27

2 I. O. and A. S. B. are both defective in this passage.

3 'करविषयेऽपि राज्ञो धर्मं निजाचारसम्पन्नं करत्वेन ददति' ( केशववैजयन्ती )

4 Omitted in I. O., A. S. B. and वी. मि.; Kane, vv. 16–17

5 Udaipur Ms. repeats these lines.

मनुः[1]

म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥

आपस्तम्बः[2]

अकरः श्रोत्रियः सर्ववर्णानां च स्त्रियः कुमाराश्च प्राग्व्यञ्जनेभ्यः । ये च विद्यार्थी वसन्ति तपस्विनश्च ये धर्मपराः । शूद्रश्च पादावनेक्ता अन्धमूकबधिरा रोगाविष्टाश्च । ये व्यर्था द्रव्यपरिग्रहैः ।

'व्यञ्जनानि' श्मश्रुप्रभृतीनि । 'व्यर्था द्रव्यपरिग्रहैः' अर्थसङ्ग्रहे विगतप्रयोजनाः ।

मनुः[3]

[ अन्धो[4] जडः पीठसर्पी सप्तत्याः स्थविरश्च यः ।

1 VII, 133 ; omitted in A. S. B. ; cf. वी. मि., p. 272

2 cf. वी. मि., p. 293 ; 2, 26, 10–17 श्रोत्रियः करं न दाप्यः । सर्ववर्णानां स्त्रियः अकराः । वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः । 'व्यञ्जनानि' श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः । विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अपि असमाप्तवेदा अकराः । 'तपस्विनः' कृच्छ्रचान्द्रायणादिप्रवृत्ताः । 'धर्मपराः' अफलकाङ्क्षिणः नित्यनैमित्तिककर्मनिरताः । धर्मपरा इति किम् ? ये अभिचारकामा मन्त्रसिद्धये तपस्तप्यन्ते ते अकरा मा भूवन्निति । यस्त्रैवर्णिकानां 'पादावनेक्ता' स शूद्रोऽप्यकरः । 'ये' च परिव्राजकादयः, 'द्रव्यपरिग्रहैः व्यर्था' निष्प्रयोजनाः, शास्त्रतो येषां द्रव्यपरिकरः प्रतिषिद्धः तेऽपि अकराः । ( हरदत्तव्या., pp, 287–288 )

3 VIII, 394

4 [ ] Words in brackets missing in the Mss.

श्रोत्रियेषु प्रकुर्वंश्च न दाप्यः केनचित्करम् ॥

'पीठसर्प्पी' पङ्गुः[1] ।

वसिष्ठः[2]

नदीकक्षवनदाहशैलोपभोगाः विष्कराः ] स्युः । तदुपजीविनो वा दद्युः । प्रतिमासं [ उद्वाहकरं तु आगमयेत ] ।

'वनदाहः' दग्धवनम् । 'तदुपजीविनः' तानेव ये उपजीवन्ति । सैव तेषां वृत्तिः ।

गौतमः[3]

शिल्पिनो मासि मास्येकं कर्म कुर्युः । एतेनाऽऽत्मोपजीविनो व्याख्याताः नौचक्रिवन्तश्च । भक्तं तेभ्योऽपि दद्यात् ।

'शिल्पिनो' लोहकारादयः । मास्येकैकमहरात्मानुरूपं राज्ञः कर्म कुर्युः, नाऽन्यत्तेभ्यो ग्राह्यम् । 'आत्मोपजीविनः' भारवाहनटनर्तकादयः । 'नौचक्रिवन्तः' नौशाकटव्यवहारिणः[4] ।

1 वी. मि., p. 272

2 XIX, 26–28 ; वी. मि., p. 274

3 10, 30–33; वी. मि., p. 275

4 cf. मस्करिभाष्य., p. 165, which *repeats* the explanations in the text, and adds–'च'करात् वन्यमृगघातकादयः । बहुवचनात् वर्धकिनापितादयः ।

मनुः[1]

नोच्छिन्द्यादात्मनो मूलं परेषां चाऽतितृष्णया ।
उच्छिन्दन्नात्मनो मूलमात्मानं तांश्च नाशयेत् ॥

करशुल्कादेरग्रहणं 'आत्ममूलच्छेदः' । यथोचितादधिकग्रहणं 'परमूलच्छेदः' ।

याज्ञवल्क्यः[2]

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्द्धयेत् ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥

प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणान्नाऽदग्ध्वा विनिवर्तते[3] ॥

कात्यायनः[4]

अन्यायेन हि यो राष्ट्रात्करं दण्डं च पार्थिवः ।
सस्यभागं च शुल्कं चाऽप्याददीत स पापभाक् ॥

मनुः[5]

अनादेयं नाऽऽददीत परिक्षीणोऽपि पार्थिवः ।
न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥

1 VII, 139 ; वी. मि., p. 275

2 1, 340-341; वी. मि., p. 276

3 मिताक्षरा follows the reading प्राणांश्चादग्ध्वा न निवर्तते ।
Aparārka adopts the reading in the text.

4 Kane, v. 75 ; वी. मि., p. 276

5 VII, 170-172 ; वी. मि., p. 275

अनादेयस्य चाऽऽदानादादेयस्य च वर्जनात् ।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह विनश्यति ॥
स्वादानाद्वर्णसंसर्गाद् दुर्बलानां च रक्षणात् ।
बलं सञ्जायते राज्ञः स प्रेत्येह च वर्द्धते ॥

'वर्णसंसर्गादिति' वर्णानां ब्राह्मणादीनां वर्णैरेव समानजातीयैर्विवाहादिसम्बन्धत्वेन वर्णसङ्करो न जायत इत्यर्थः ।

कात्यायनः[1]

एवं प्रवर्तते यस्तु लोभं त्यक्त्वा नराधिपः ।
तस्य पुत्राः प्रजायन्ते राष्ट्रं कोशश्च वर्द्धते ॥

महाभारते[2]

धर्मार्जितो महान् कोशो यस्य स्यात्पृथिवीपतेः ।
सोऽस्त्यल्पपरिवारोऽपि पृथिवीमधितिष्ठति ॥

इति कोशः ॥

1 Kane, v. 18 ; वी. मि., p. 276

2 Name omitted in Udaipur Ms ; वी. मि., p. 276

९

# अथ दण्डः

तत्र महाभारते

प्रकाशश्चाऽप्रकाशश्च दण्डोऽत्र परिकल्पितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बलवत्तरः ॥
रथा नागा हयाश्चैव पादाताश्चैव[1] भारत ।
विष्टिर्नाविचाराश्चैव दैशिका इति चाऽष्टमः ॥
अनुरक्तेन हृष्टेन पुष्टेन च महीपते ।
स्वल्पेनाऽपि हि सैन्येन महीं जयति पार्थिवः ॥

'विष्टिः' बलात्कारेण आकृष्टः कर्मकरः । 'दैशिकाः' देशे भवाः पुरुषाः[2] ॥

इति दण्डः ॥

1 Udaipur Ms. wrongly reads पादपश्चैव

2 Copied by वी. मि., p. 277

## १०

# अथ मित्रम्

तत्र मनुः[1]

हिरण्यभूमिसम्प्राप्त्या पार्थिवो न तथैधते ।
यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥
धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥

याज्ञवल्क्यः[2]

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ॥

मत्स्यपुराणे

पितृपैतामहं मित्रं सामन्ताश्च[3] तथा रिपोः ।
कृत्रिमं च महाभाग त्रिविधं मित्रमुच्यते ॥

महाभारते[4]

वेदितव्यानि मित्राणि बोद्धव्याश्चाऽपि शत्रवः ।

1 VII, 208–209 ; वी. मि., p. 277

2 I. 352 ; वी. मि., p. 277; I. O. omits the next *six* quotations.

3 वी. मि., p. 277 has अमित्रं च तथा रिपोः इति विष्णुधर्मोत्तरपाठः ।

4 वी. मि., p. 278

एतत्सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसंमतम् ॥
योऽस्मिन् जीवितस्याऽर्थे पश्यन् पीडां न जीवति ।
स तस्य तावन्मित्रं स्याद्यावत्तस्माद्विपर्ययः ॥
नाऽस्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम् ।
अर्थयुक्त्याऽभिजायन्ते मित्राणि रिपवस्तथा ॥
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्य्यये ।
शत्रुश्च मित्रतामेति स्वार्थस्तु बलवत्तरः ॥

व्यासः

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥

याज्ञवल्क्यः[1]

स्वाम्यमात्यजना दुर्गङ्कोशो दण्डस्तथैव च[2] ।
मित्राण्येताः प्रकृतयः राज्यं सप्ताङ्गमुच्यते ॥

मनुः[3]

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्तप्रकृतयो ह्येताः सप्ताङ्गं राष्ट्रमुच्यते ॥
सप्तानां प्रकृतीनां च राज्यस्याऽऽसां यथाक्रमम् ।

1 वी. मि., p. 277

2 मिताक्षरा reads : स्वाम्यमात्या जनो दुर्गं and राज्यं सप्ताङ्गमुच्यते ; Aparārka has जना दुर्गः (1, 353) ; वी. मि., p. 278

3 IX, 294–297; वी. मि., p. 278

पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं नृपः[1] ॥
सप्ताङ्गस्याऽस्य[2] राज्यस्य विष्टब्धस्य त्रिदण्डवत् ।
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ॥
तेषु तेषु हि कृत्येषु तत्तदङ्गं विशिष्यते ।
येन तत्स्थाप्यते कार्यं तत्तस्मिन् श्रेष्ठमुच्यते ॥

'व्यसनं' व्यसनकारणं दोषवदिति शेषः[3] ॥

इति मित्रम् ॥

1 Lacunae in I. O. ends here ; printed text reads व्यसनं महत्

2 *Ibid,* सप्ताङ्गस्येह

3 वी. मि., appropriates the whole of this section and does not add a word but re-arranges the quotations.

## ११

# अथ राजपुत्ररक्षा

तत्र मत्स्यपुराणे[1]

राजपुत्रस्य रक्षा च कर्तव्या पृथिवीक्षिता ।
आचार्य्यश्चाऽपि कर्त्तव्यो नित्ययुक्तैश्च रक्षिभिः ॥
धर्मकामार्थसूत्राणि[2] धनुर्वेदं च शिक्षयेत् ।
रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥
शिल्पानि शिक्षयेच्चैनमाप्तैर्मिथ्याप्रियं वदेत्[3] ।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥
न चाऽस्य सङ्गो दातव्यः [4]क्षुद्रलुब्धावमानितैः ।
तथा च विनयेदेनं यथा यौवनगो मुखे[5] ॥
इन्द्रियैर्नाऽपकृष्येत सतां मार्गात् सुदुर्गमात् ।
गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥
बन्धनं तस्य कर्तव्यं गुप्तदेशे [6]सुखान्वितम् ।

1 म. पु., ch. 220; वी. मि., p. 315

2 म. पु., and वी. मि., reads शास्त्राणि for सूत्राणि

3 म. पु., p. 468 and वी. मि., p. 315 read नाप्तैः मिथ्याप्रियं वदेत्

4 म. पु., and वी. मि., reads क्रुद्ध for क्षुद्र

5 म. पु., गोचरे for गो मुखे

6 वी. मि., p. 315 reads शुभान्वितम्, but adds 'सुखान्विते' इति पाठे देशविशेषणं तत्

अविनीतकुमारं हि कुलमाशु विशीर्यते ॥
अधिकारेषु सर्वेषु विनीतं विनियोजयेत्।
आदौ स्वल्पे ततः पश्चात्क्रमेण च महत्स्वपि ॥

'यौवनगः' यौवनप्राप्तः। 'मुखे' आदौ[1]।

महाभारते[2]

नैव स्वैररिभिर्वाऽपि ग्रस्यते पुत्रवान्नृपः।
तस्माद्राजा सदा पुत्रं संरक्षेच्छिक्षयेत च ॥
अमात्यैरात्मसदृशैः राजपुत्रस्य रक्षणम्।
चारैश्च विविधोपायैः प्रविधेयं पृथग्विधैः ॥

'स्वकीयैः' सामन्तादिभी रक्षणं प्रविधेयमित्यन्वयः ॥

इति राजपुत्ररक्षा[3] ॥

1 वी. मि., p. 315
2 वी. मि., p. 316
3 Section completely appropriated by वी. मि., pp. 315–316

# अथ मन्त्रः[1]

तत्र मनुः[2]

उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुत्वाऽग्निं [3]ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥
तत्राऽऽस्थिताः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ॥

श्रीरामायणे[4]

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समेवतानां गुणदोषं वदाम्यहम् ॥
मन्त्रिभिऽर्मन्त्रसंयुक्तैः समर्थैर्मन्त्रनिश्चये ।
मित्रैर्वाऽपि समानार्थैर्बान्धवैश्चातिवाहितैः ॥
मन्त्रिभिर्मन्त्रयित्वा यः कर्मारम्भे प्रवर्त्तते ।
तत्रैव कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥
एकोऽर्थं विमृशत्येको धर्मे प्रकुरुते मतिम् ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥
गुणदोषावनिश्चित्य त्यक्तधर्मव्यपाश्रयः ।

1 वी. मि., pp. 306-312

2 VII, 145-6; name supplied by A. S. B.

3 From this upto the last *Pāda* of the verse of याज्ञवल्क्य below missing in I. O.

4 युद्धकाण्ड., 6, 6-15

करिष्यामीत्युपेक्षेत यः कार्यं स नराधमः ॥

यथैव पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेयः उत्तमाधममध्यमः ॥

ऐकमत्यमुपागत्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणां मन्त्रनियमः तमाहुर्मन्त्रमुत्तमम् ॥

बह्वयस्तु मतयो भूत्वा मन्त्रिणामर्थसिद्धये ।
पुनर्यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः ॥

अन्योन्यमतिमास्थाय यत्र सम्प्रतिपद्यते[1] ।
न चैकमत्ये श्रेषोऽस्ति स मन्त्रोऽधम उच्यते ॥

अर्थानर्थौ हि यत्रोभौ संशयश्च परीक्ष्यते[2] ।
स मन्त्र इति विज्ञेयः शेषस्तु खलु विक्रमः ॥

'समानार्थैः' समानप्रयोजनैः[3] ।

मनुः[4]

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेदाविभावितः[5] ॥

यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।
[ स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥

1 'प्रतिभाष्यते' ( Mylapore *ed.* p. 675 )

2 Missing in Mylapore *edn.*

3 Borrowed by वी. मि., p. 307

4 VII, 147-148

5 वी. मि., p. 308 omits the fist *śloka* here.

[ ] Portions between asterisks missing in I. O.

'निःशलाके' निर्जने ।

याज्ञवल्क्यः[1]

मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्याद्यथाऽस्य न ] विदुः कर्मणामाफलोदयात् ॥

मनुः[2]

जडमूकान्धबधिरांस्तैर्यग्योनान्वयोतिगान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकाले प्रसेधयेत् ॥
निन्दन्त्यवमता मन्त्रं[3] तैर्यग्योनास्तथैव च ।
स्त्रियश्चैव विशेषेण तस्मात्तास्वादृतो भवेत् ॥

'तैर्य्यग्योनाः' तिर्यग्योनिभवाः शुकसारिकादयः ।

महाभारते[4]

मन्त्रभेदस्य यत्प्राज्ञो द्वाराणीमानि कल्पयेत् ।
अथ सम्पत्तिकामश्च रक्षेदेतानि नित्यशः ॥
मदं स्वप्नमवज्ञानमाकारं चाऽऽत्मसम्भवम् ।
दुष्टामात्येषु विश्रम्भं दूतश्चाऽकुशलं तथा ॥
मन्त्रनिश्चयतत्वज्ञं षाड्गुण्यगुणवेदिनः ।

1 I, 344 ; वी. मि., p. 308. Printed text reads तस्मान्मन्त्रं

2 XI, 52 ; VII, 149 ff. ; वी. मि., p. 309

3 वी. मि., p. 309, has भिन्दन्ति अवमता, which is the reading of the printed मनुस्मृति ( Chowkh. *ed.* )

4 वी. मि., p. 310

शक्तान् कुलोचितान् भक्ताननाक्षारितपूर्वकान् ॥
नीतिज्ञान् व्यवहारज्ञानितिहासार्थकोविदान् ।
इङ्गितज्ञानुपायज्ञान् शूरान् वीरान् कुलोद्गतान् ॥
सर्वकार्येषु निपुणान् इष्वस्त्रविधिपारगान् ।
दुर्गयन्त्रविधानज्ञान् धर्मशास्त्रार्थपारगान् ॥
अक्षुद्रान् क्षमिणः प्राज्ञाननागतविधायिनः ।
आयत्यां प्रतिकारज्ञांस्तदात्वे दृढनिश्चयान् ॥
द्विषन्मित्राद्युदासीनभावज्ञान् संशितव्रतान् ।
स्वभावगुप्तानचलानचलानिव भारत ॥
धर्मशीलानकृपणांस्तथा सर्वोपधातिगान् ।
धिया सर्वान् सम्परीक्ष्य राजा कुर्वीत मन्त्रिणः ॥
येऽस्य राजधुरं वोढुं समर्थाः सद्गवा इव ।
तैः समेत्य महीपालो गुप्तमन्त्रो जितेन्द्रियः ॥
विधानां दर्शने यत्नमातिष्ठेद्भरतर्षभ ॥

'अनाक्षारितपूर्वकान्' वाचाऽनवमानितान् । 'सर्वोपधातिगान्' सर्वच्छद्मवर्जितान् ।

मत्स्यपुराणे

नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ।
नाऽऽरुह्य विषमां नावं नाऽपरीक्षितनाविकाम्[1] ॥

1 म. पु., ch. 220, 37–38; compare कौटलीय अर्थशास्त्र ( Mysore *edn.* ) p. 27:
"नैकस्य मन्त्रसिद्धिरस्ती"ति विशालाक्षः

श्रीरामायणे[1]

अनभिज्ञाय शास्त्राणि बहवः पशुबुद्धयः ।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥
मन्त्रिरूपा हि रिपवः सम्भाव्यास्ते विचक्षणैः ।
ये हितोदयमुत्सृज्य विपरीतोपसेविनः ॥
अहितं हि हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः ।
अवेक्ष्या मन्त्रबाह्यास्ते कर्त्तव्याः कृतदूषणाः ॥
विनाशाय स्वभर्त्तुर्हि संहताः शत्रुभिर्बुधैः ।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥

मनुः[2]

मौलान् शास्त्रविदः शूरांल्लब्धलक्ष्यान् कुलोद्गतान् ।
सचिवान् सप्त वाऽष्टौ वा प्रकुर्वीत परीक्षितान् ॥
तेषां स्वस्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मने ॥
सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
नित्यं तस्मिन् समाश्वासः सर्वकार्याणि निक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य ततः कार्यं समारभेत् ॥

1 युद्धकाण्ड., 63, 14–17, Mylapore *edn.*, shows some differences.

2 VII, 54, 57–59

श्रीरामायणे[1]

यत् प्रियं च हितं चैव साधुधर्म्यं च सर्वशः ।
ब्रूयुस्तन्मन्त्रिणो वाक्यं मन्त्र्यमाणे विशेषतः ॥
प्राप्ते कार्ये शरीरं तु नेतुं स्वां गुणसम्पदम् ।
प्रियमुत्सृज्य वक्तव्यं हितमेव हि मन्त्रिणा ॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः[2] ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

मन्त्रिण इत्यनुवृत्तौ मनुः[3]

तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् ।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥
मध्यन्दिने च रात्रौ[4] च विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्द्धं तैरेक एव वा ॥
परस्परविरुद्धानां तेषां च समुपार्जनम् ।
कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥
दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥

1 वी. मि., p. 311

2 अरण्यकाण्ड., 37, 2. and युद्धकाण्ड., 16, 20, the other two verses are not to be traced in the *Rāmāyaṇa*, but all the three are reproduced in the same order by वी. मि., p. 311

3 VII, 56. These verses are dropped by वी. मि.

4 VII, 151–158 A; printed texts read मध्यन्दिनेऽर्धरात्रौ

कृत्स्नं चाऽष्टाविधं कर्म पञ्चवर्गं च यत्नतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥

मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥

एताः प्रकृतयो मूलं मण्डलस्य समासतः ।
अष्टौ चाऽन्याः समाख्याता द्वादशैव तु ताः स्मृताः ॥

अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चाऽपराः ।
प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥

अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम्[1] ॥

विकृष्टेऽध्वन्यनायत्तमुदासीनो बलान्वितः[2] ।
स खिलो मण्डलार्थस्तु यस्मिन् ज्ञेयः समध्यमः ॥

तथा[3]

प्राज्ञं कुलीनं दातारं शूरं दक्षं तथैव च ।
कृतज्ञं शक्तिमन्तं च कष्टमाहुररिं बुधाः ॥

1 Line missing in Udaipur Ms. ; cf *Kāmandaka,* VIII, 16-41, where the different computitions as Mandalas are described. The selection of the Mānava rule in the text is dictated by an obvious desire to exclude mere अर्थशास्त्र authorities.

2 This verse is not in Kullūka's text. The Chowkhamba *edn.* p. 218, reads : विप्रकृष्टेऽध्वनो यत्र उदासीनो बलान्वितः

3 VII, 210-211

आर्यता[1] पुरुषज्ञानं शौर्यं करुणवेदिता ।
स्थूललक्षश्च[2] सततमुदासीनगुणोदयः ॥

तथा[3]

तान् सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥

'स्थानं' चतुर्विधं सैन्यकोशपुरराष्ट्रभेदेन । 'समुदयः' कृषिव्यजनगुल्मस्थानवणिक्पशुशुल्कदण्डादिः । 'गुप्तिः' राष्ट्रादिरक्षा । 'लब्धप्रशमनं' देवताश्रमविद्यावतां धार्मिकाणां दानसन्मानयोगः । 'तेषां' धर्मार्थकामानाम् । 'समुपार्जनं' सम्यगविरोधेनोत्पादनम् । 'प्रणिधयः' चराः । 'अष्टविधं कर्म' उशनसोक्तं यथा—

आदाने च विसर्गे च तथा प्रैषनिषेधयोः[4] ।
पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्धौ तथा युक्त आत्मशुद्धौ तथैव च ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥

'पञ्चवर्गः' पञ्चप्रकाराणां चाराणां समूहः । ते च यथा— श्रद्धेयदेशविशेषशिल्पभाषादिविदो जनाः । तथा कुब्ज-

1 Printed texts read आर्यता for अयन्ता as incorrectly given in the Mss.

2 *Ibid*, स्थौललक्ष्यं

3 VII, 159

4 Frist śloka omitted by I. O.

वामनकिरातमूकबधिरजडान्धादिछद्मिनः । तथा नटनर्तकगायनादयः । तथा स्त्रियोऽभ्यन्तरचारिण्यः । तथा श्रमणादयः । एतेषां प्रवृत्तिज्ञानार्थाश्चारसमूहाः स्वस्य परस्य च बोद्धव्याः ।

'अनुरागापरागौ' मन्त्रिपुरोहितसेनापतियुवराजदौवारिकादीनामात्मीयपञ्चविधचारवर्गाद्बोद्धव्यौ इत्यर्थः । 'मध्यमस्य प्रचारमि' ति । एतस्मिन् राजमण्डले इमाश्चतस्रो राजप्रकृतयो भवन्ति, विजिगीषुररिर्मध्यम उदासीन इति । तत्रैषामेव राजप्रकृतिसम्पन्नो जेतुमभ्युद्यतः स विजिगीषुः । शत्रुस्त्रिविधः—सहजः, कृत्रिमः, स्वभूम्यनन्तर इति । 'मध्यमः' अनयोररिजिगीषावृत्तयोरसंहतयोर्निग्रहसमर्थः । 'उदासीनः' अरिविजिगीषुमध्यमानामसंहतानां निग्रहसमर्थः । एतासां चतसृणां मण्डलस्य मूलप्रकृतीनामेकैकस्याः प्रकृतेरमित्रमित्रं वेति द्वे द्वे प्रकृती । एता अष्टौ, आद्याश्चतस्रः । एवमुभयतो द्वादश भवन्ति । 'अमात्ये'त्यादि अमात्यादयः पञ्च प्रकृतयः द्वादशानां प्रकृतीनामेकैकस्या भवन्त्यतः षड्द्वादशकाद्विसप्ततिर्भवति[1] ।

1 वी. मि., p. 323, which apprrpriatos the comments of लक्ष्मीधर in the above passage up to the asterisk apparently had a different text, since it contriues *Kalpataru* thus : "कल्पतरुस्तु–'विजिगीषुमित्रं, विजिगीषुमित्रमित्रं, अरिमित्रं, अरिमित्रमित्रं, मध्यममित्रं, मध्यममित्रमित्रं, उदासीनमित्रं, उदासीनमित्रमित्रं चेत्यष्टौ, प्रकृताश्चतस्रः प्रकृतय इति द्वादश" इत्याह ।

महाभारते

विजिगीषोररिर्मित्रमरेर्मित्रमतः परम् ।
मित्रमित्रं शत्रुमित्रं मित्रं ज्ञेयं पुरस्सरम् ॥
पार्ष्णिग्राहस्तथा क्रन्दःपार्ष्ण्यासारश्च पृष्ठतः ।
आक्रन्दासार इति च ज्ञेयं मण्डलचिन्तकैः ॥
पार्ष्णिग्राहाभिसारं च पार्ष्णिग्राहं च विग्रहे ।
राजाक्रन्दाभिसारेण तथाऽऽक्रन्देन वर्द्धयेत् ॥
विरोधयेच्छत्रुमित्रं [1]मित्रमित्रमरेस्तथा ।
मित्रेण मित्रमित्रेण मध्यमत्वाभिवाञ्छकः ॥
मन्त्रप्रभूत्साहशक्तिः पालयेदात्मवान्नृपः ॥

'वर्द्धयेत्' छेदयेत् ॥

इति मन्त्रः ॥

1 Udaipur Ms. reads विबोधयेत्; but वी. मि., p. 322 confirms the text.

# १३

# [1]अथ षाड्गुण्यम्

तत्र मनुः[2]

सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
आसनं चैव यानं च [3]सन्धाय च विगृह्य च ।
कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥
सन्धिं तु द्विविधं विद्याद्राजविग्रहमेव च[4] ।
उभे यानासने चैव द्वैधं संश्रयमेव च[5] ॥
समानयानकर्मा च विपरीतस्तथैव च ।
तदा त्वायतिसंयुक्तः सन्धिर्ज्ञेयो विचक्षणैः[6] ॥
स्वयं कृतं च कार्यार्थमकाले काल एव च ।

1 वी. मि., p. 324 ff.

2 VII, 160–180

3 Printed texts and वी. मि., p. 324, read सन्धिं विग्रहमेव च

4 *Ibid*, वी. मि., p. 324 राजा विग्रहमेव च

5 *Ibid*, द्विविधः संशयः स्मृतः

6 *Ibid*, द्विलक्षणः for विचक्षणैः ; वी. मि., p. 324 explains : 'सन्धिः' हस्त्यश्वादिदानादिना परस्परमुपकर्तव्यमित्यादिव्यवस्था । 'विग्रहो' विरोधः । 'यानं' स्वबलेन शत्रुं प्रति गमनम् । 'आसनं' विग्रहमुपेक्ष्य स्वदेशावस्थितिः । 'द्वैधीभावः' स्वबलस्य द्विधाकरणम् । 'संश्रयः' परपीडितस्य प्रबलराजान्तराश्रयणम् ।

मित्रं चैवाप्यप्रकृते द्विविधो विग्रहः स्मृतः[1] ॥
एकाकिनश्चात्ययिके काले प्राप्ते [2]यथेच्छया ।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥
क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ।
मित्रस्य चाऽनुरोधेन द्विविधं स्मृतमासनम् ॥
बलस्य स्वामिनश्चैव स्थितिः कार्य्यस्य सिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥
अर्थसम्पादनार्थं च पीड्यमानश्च शत्रुभिः ।
साधुषु व्यपदेशश्च[3] द्विविधः संश्रयः स्मृतः ॥
यदाऽवगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे वाऽधिकां[4] पीडां तदा सन्धिं समाश्रयेत् ॥
यदा प्रकृष्टा मन्येत सर्वास्तु प्रकृतीर्भृशम् ।
अत्युच्छ्रितं तथाऽऽत्मानं तदा मन्येत[5] विग्रहम् ॥
यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् ।
परस्य विपरीतं च तदा यायाद्रिपुं प्रति ॥
यदा तु स्यात्परिक्षीणो वाहनेन बलेन च ।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥
मन्येताऽरिं यदा राजा सर्वथा बलवत्तरम् ।

1 Printed texts read मित्रस्य चैवापकृते

2 *Ibid*, यदृच्छया

3 *Ibid*, व्यपदेशार्थं

4 *Ibid*, चाल्पिकां

5 *Ibid*, कुर्वीत

तदा द्विधा बलं कृत्वा साधयेत्कार्यमात्मनः ॥
यदा परबलानां तु गमनीयतमो भवेत् ।
तदा तु संश्रयेत् क्षिप्रं धार्मिकं बलिनं रिपुम्[1] ॥
निग्रहं प्रकृतीनां च कुर्याद्यो निर्बलस्य च[2] ।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥
यदि तत्राऽपि सम्पश्येद्दोषं संश्रयकारिणम्[3] ।
सुयुद्धमेव तत्राऽपि निर्विशङ्कः समाचरेत् ॥
सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।
यथा[4] स्वादधिका न स्युर्मित्रोदासीनशत्रवः ॥
आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ।
अतीतानां च सर्व्वेषां गुणदोषौ च तत्वतः ॥
आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥
यथैनं नाऽभिसन्दध्युर्मित्रोदासीनशत्रवः ।
तथा सर्वं[5] समादध्यादेष सामासिको नयः ॥

तथा[6]

चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ।

1 Printed texts read: नृपम्; so वी. मि., p. 328

2 *Ibid*, कुर्याद्योऽरिबलस्य च

3 *Ibid*, वी. मि., and I O., कारितम्

4 *Ibid*, and वी. मि., p. 328, यथाऽस्याभ्यधिका; A. S. B., यथाऽस्मादधिका न स्युः

5 *Ibid*, and वी. मि., p. 328, स विदध्यात्

6 IX, 298–300; वी. मि., p. 328, continues the

स्वशक्तिं परशक्तिं च नित्यं विद्यात्परात्मनोः[1] ॥
पीडनानि च सर्वाणि व्यसनानि तथैव च ।
आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम् ॥
आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥

इति षाड्गुण्यम् ॥

*Manusamhita* verses over this break, without indicating that the verses are not continuous in the original.

1 *Ibid*, and वी. मि., महीपतिः

# अथ यात्रा

तत्र मनुः[1]

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः ।
तदाऽनेन विधानेन यायादरिपुरं शनैः ॥
मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः ।
फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथाबलम् ॥
अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने वोत्थिते रिपोः ॥

याज्ञवल्क्यः[2]

यदा सस्यगुणोपेतं परराष्ट्रं परं व्रजेत्[3] ।
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥

मत्स्यपुराणे[4]

यदा मन्येत नृपतिराक्रन्देन बलीयसा ।
पार्ष्णिग्राहाभिभूतोऽयं तदा यात्रां प्रयोजयेत् ॥

1 VII, 181–183 ; वी. मि., p, 330

2 I, 348 ; omitted by I. O.

3 Printed texts read तदा व्रजेत्

4 म. पु., ch. 240, 2, 47–9. 15, ( p. 491 ) ; I. O. omits the name.

पार्ष्णिग्राह्याधिकं सैन्यं मूले निक्षिप्य च व्रजेत् ।
दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम् ॥
तमृक्षपीडासन्तप्तं पीडितं च यथाग्रहैः ।
स्वबलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥
सम्भूतान्तरकोपं च क्षिप्रं यायादरिं नृपः ।
शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने ॥

तथा[1]

निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ।
अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं शुभम् ॥
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ।
लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत्तथा ॥
विपर्ययेन विहितं सर्वस्त्रीणां विपर्ययम् ।
दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ॥

अथोन्यथा सिद्धिरजल्पनात्तु
फलस्य शस्तस्य विनिन्दितस्य ।
अरिष्टचिह्नोपगमे द्विजानां
कार्यं सुवर्णेन च तर्पणं स्यात् ॥

श्रीरामायणे[2] शुभाशुभविषये त्रिजटावाक्यम्—

समग्रभवनां कृत्स्नां ग्रसमानः पुरीमिमाम्[3] ।

1 म. पु., ch. 241, 2. 12, 14

2 सुन्दरकाण्ड., sarga 27 ; वी. मि., p. 333

3 Not found in printed texts.

स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ।
युक्तां [1]नागसहस्रेण सुखमास्थाय राघवः ॥
स्वप्ने चाऽद्य मया दृष्टः शुक्लाम्बरवरावृतः ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थितः ॥
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ।
आरूढः शैलसंकाशं विचरन् सह लक्ष्मणः ॥
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ।
शुक्लमाल्याम्बरधरौ जानकीं प्रत्युपस्थितौ ॥
ततस्तस्य नगस्याग्रादाकाशस्थस्य दन्तिनः ।
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ।
चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ॥
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ।
सीतया च विशालाक्ष्या लङ्कां पर्यभिसंस्थितः ॥
पाण्डुरर्षभयुक्तेन रथेनाऽष्टयुजा स्वयम् ।
शुक्लमाल्याम्बरो रामो लक्ष्मणेन सहाऽऽगतः ॥
[ रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः ।
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥ ]
विमानात्पुष्पकादद्य रावणः पतितो मया ।
कृश्यमाणस्त्रिया दृष्टो मुण्डः पीताम्बरो हसन् ॥

1 हंस for नाग and स्वयं for सुखं ( Kumbakonam *ed.*)
वाजि for नाग ( Nirnayasāgara *edn.* )

रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
स गत्वा दक्षिणामाशां प्रविष्टो गोमयं ह्रदम् ॥

कण्ठे बध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली करालवदना दिशं याम्यां प्रकर्षति ॥

वराहेण दशग्रीवः शिंशुमारेण चाऽसकृत्[1] ।
उष्ट्रेण च मया दृष्टः[2] प्रयातो दक्षिणां दिशम् ॥

समाजश्च मया दृष्टो गीतवादित्रनृत्यवान् ।
बिभ्रतां रक्तमाल्यानि रक्षसां रक्तवाससाम् ॥

लङ्का चेयं पुरी दृष्टा गजवाजिसमाकुला[3] ।
सागरे पतिता कृत्स्ना भग्नप्राकारतोरणा ॥

पीत्वा तैलं प्रनृत्यन्ति प्रहसन्ति महास्वनाः ।
लङ्कायां भस्मरूक्षायां सर्वा राक्षसयोषितः ॥

कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।
पीतैर्निवसनैर्दृष्टाः क्रीडन्तो गोमयह्रदे[4] ॥

मत्स्यपुराणे[5]

इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।

1 इन्द्रजित् इति मुद्रितपुस्तकेषु ; वी. मि., p. 336, असकृत्

2 वी. मि., मया दृष्टः ; मुद्रितपुस्तकेषु 'कुम्बकर्णः'

3 A. S. B. and वी. मि., p. 336 रथाकुला ; printed texts read : सवाजिरथकुञ्जरा

4 Printed texts read : रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदम् ।

5 म. पु., ch. 242. 2, ff ; वी. मि., p. 336 adds विष्णुधर्मोत्तरयोरपि

नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः[1] ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥
उच्चैः[2] प्रपतनं चैव दोलारोहणमेव च ।
अर्जनं पङ्कलोहानां तपतामपि धारणम् ॥
रक्तपुष्पद्रुमाणां च चण्डालस्य तथैव च ।
वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥
भक्षणं पक्वमांसानां तैलस्य कृशरस्य च ।
नर्तनं हसनं चैव विवाहो गतिमेव च ॥
तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम् ।
स्रोतोऽवगाहो गमनं स्नानं गोमयवारिणा ॥
पङ्कोदकेन च तथा महीतोयेन चाऽप्यथ ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥
शक्रध्वजानां पतनं पतनं शशिसूर्य्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥
देवद्विजातिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ॥
फलापहारहानिश्च गृहाणां चैव पातनम् ।

1 Udaipur Ms. reads : पुष्प for वृक्ष

2 A. S. B. and वी. मि., p. 336 उच्चात् प्रपतनं ; I. O. defective here.

गृहसंमार्जनं चैव धनहानिं विनिर्दिशेत् ॥
पीडा पिशाचक्रव्यादवानरान्त्यनरैरपि[1] ? ।
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ॥
काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं तथा ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ॥

'तद्वत्स्त्रीक्रीडनं' काषायवस्त्रयुक्तस्त्रिया सह क्रीडनम्[2] ।

एवमादीन्यधन्यानि स्वप्नानि तु विनिर्दिशेत् ।
एषामकथनं[3] धन्यं भूयश्च स्वपनं तथा ॥
कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम् ।
स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम् ॥
गजेन्द्रमोक्षश्रवणं[4] ज्ञेयं दुःस्वप्ननाशनम् ।
स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ॥
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ।
चतुर्थे मासमात्रेण पश्यतो नाऽत्र संशयः ॥
एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभम् ।
पश्चाद्दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत् ॥

1 म. पु., p. 494, reads : क्रीडापिशाचक्रव्यादवानरर्क्षनरैरपि । वी. मि., p. 337 follows the text.

2 Explanation reproduced in वी. मि., p. 337

3 So वी. मि., p. 337 ; म. पु., p. 494, reads : एषा सङ्कथनं धन्यं भूयः प्रस्वापनं तथा, consistently with books on omens.

4 A. S. B., I. O. and वी. मि., p. 339 read नागेन्द्र

तस्माच्छोभनके स्वप्ने पश्चात्स्वप्नं न शस्यते ।
शैलप्रासादनागाश्च वृषभारोहणं हितम् ॥
द्रुमाणां श्वेतपुष्पाणां गमनं च तथा द्विज ।
द्रुमतृणोद्भवो [1]वाहौ तथा च बहुबाहुता ॥
तथा च बहुशीर्षत्वं पलितोद्भव एव च ।
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ॥
चन्द्रार्कताराग्रसनं परिमार्जनमेव च ।
शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा ॥
भूम्यम्बुधराग्रसनं शत्रूणां च वधक्रिया ।
जयो विवादे द्यूतेषु संग्रामे च तथा द्विज ॥
भक्षणं चाऽऽर्द्रमांसानां [ [2]मत्स्यानां पायसस्य च ।
दर्शनं रुधिरस्याऽपि स्नानं च रुधिरेण ह ॥
सुरारुधिरमद्यानां ] पानं क्षीरस्य चाऽप्यथ ।
अन्त्रैर्विवेष्टनं भूमौ निर्मलं गगनं तथा ॥
सुखेन दोहनं शस्तं महिषीणां गवां तथा ।
सिंहीनां हस्तिनीनां च बडवानां तथैव च ॥
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ।
अम्भसा त्वभिषेकश्च गवां शृङ्गाश्रितेन च ॥
चन्द्राद्भ्रष्टेन वै राजन् ज्ञेयो राज्यप्रदो हि सः ।
राज्याभिषेकश्च तथा छेदनं शिरसस्तथा ॥

1 म. पु., p. 494, नाभौ for वाहौ

2 [ ] Lacuna in Udaipur Ms. supplied by I. O., A. S. B. and म. पु.

मरणं वह्निदाहश्च वह्निदाहो गृहादिषु ।
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्यादिवादनम् ॥
तथोदकानां तरणं विषयस्य च लङ्घनम् ।
हस्तिनीबडवानां च गवां च प्रसवो गृहे ॥
आरोहणं तथा [1]श्वानां रोदनं च तथा शुभम् ।
वरस्त्रीणां तथा लाभस्तदालिङ्गनमेव च ॥
निगडैर्बन्धनं धन्यं तथा विष्टानुलेपनम् ।
जीवानां[2] भूमिपालनां सुहृदामपि दर्शनम् ॥
दर्शनं देवतार्चानां विमलानां तथाऽम्भसाम्[3] ॥

शुभान्यथैतानि नरस्तु दृष्ट्वा
प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम् ।
स्वप्नानि धर्मज्ञ भृतांवरिष्ठ
व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि ॥

मनुः[4]

कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।
उपगृह्यास्पदं चैव चारान् सम्यग्विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।
साम्परायिककल्पेन यायाद्रिपुपुरं प्रति[5] ॥

1 Lacuna here in I. O.
2 A. S. B., जीवता
3 Mss. read wrongly तथा सभाम्
4 VII, 184–6
5 Printed texts read : शनैः for प्रति

शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥

'साम्परायिककल्पेन' युद्धकल्पेन ।

मत्स्यपुराणे[1]

पदातिनागबहुलां सेनां प्रावृषि योजयेत् ।
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ॥
खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः ।
चतुर्विधबलोपेतां[2] वसन्ते वा शरद्यथ ॥
सेना पदातिबहुला यस्य स्यात् पृथिवीपतेः ।
अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः ॥
रम्ये[3] वृक्षावृते देशे स्थितं शत्रुं तथैव च ।
किञ्चित्पङ्के तथा यायाद्बहुनागो नराधिपः ॥
रथाश्वबहुलो यायात्क्षेत्रं समपथाश्रयम् ।
जलाश्रयं[4] नौबहुलस्तथा राजा रिपूञ्जयेत् ॥
खरोष्ट्रबहुलो राजा शत्रुं बन्धनसंस्थितम्[5] ।
बन्धनस्थोऽपि योज्योऽरिः सदा प्रावृषि भूभुजा ॥

1 म. पु., ch. 240, 19-27; वी. मि., p. 397

2 म. पु., p. 492, चतुरङ्गबलोपेताम्

3 *Ibid*, and वी. मि., p. 497, गम्ये for रम्ये

4 So वी. मि., p. 337; but म. पु., p. 492 reads तमाश्रयन्तो बहुलाः तांस्तु राजा प्रपूजयेत् ।

5 वी. मि., शत्रुं च वनसंस्थितम् ; म. पु., शत्रुर्बन्धेन संस्थितः

हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत् ।
यवसेन्धनसंयुक्तं काले पार्थिवहैमजे ॥
शरद्वसन्तौ धर्मज्ञ कालौ साधारणौ स्मृतौ ॥

विज्ञाय राजा द्विजदेशकालौ
दैवं त्रिकालं च तथैव बुध्वा ।
यायात्परं कालविदां मतेन
सञ्चिन्त्यमानं[1] द्विजमन्त्रविद्भिः ॥

मनुः[2]

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।
वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥
यतः[3] शङ्केत सभयं ततो विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निवसेत तदा[4] स्वयम् ॥
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ।
भयं[5] यतो वा शङ्केत तां प्राचीं कल्पयेद्दिशम् ॥
गुल्मांश्च स्थापयेदाप्तान् शतसंख्यांस्ततस्ततः ।
स्थाने युद्धे च कुशलानभीतानधिकारिणः[6] ॥

1 म. पु., has सार्धं for मानं, the reading followed by वी. मि.

2 VII, 187–190 ; वी. मि., p. 400

3 Printed texts : यतश्च भयमाशङ्केत

4 *Ibid*, सदा for तदा ; so. वी. मि.

5 *Ibid*, यतश्च भयमाशङ्केत् प्राचीन्तां कल्पयेद्दिशम् ।

6 *Ibid*, अभीरूनविकारिणः

शङ्खलिखितौ[1]

राजक्रतुरेवाऽश्वमेधस्तं नाऽसार्वभौमः प्रतिपादयितुमर्हति। अश्वमेधेन यक्ष्य इति परविषयमभियायाद्देशकालशक्तिसम्पन्नः प्रभूतयवसेन्धनोदकाविच्छिन्नसाम्परायिकः। पथि संविहितसर्वोपकरणो दुर्गासारामात्यदेशदण्डाक्रन्दाद्यगुणविधिज्ञः, पर्षदम्प्रति नयवान् विदितं अध्वानं हितमनुक्रामेत् यथा भूमिभागस्तथा विनियोगः श्रेयान् पानभोजनोपनिवेशः स्थानशङ्काप्रतिविधानकुशलो भूपतिरवहितः शत्रुणा सह युध्येत्।

याज्ञवल्क्यः[2]

य एव धर्मो नृपतेः स्वराष्ट्रपरिपालने।
तमेव कृत्स्नमाप्नोति[3] परराष्ट्रं वशं नयन्॥

मनुः[4]

उपरुध्यारिमासीत राष्ट्रं वाऽस्योपपीडयेत्।
दूषयेच्चाऽस्य सततं यवसान्नोदकेन्धनम्॥
भिन्द्याच्चैव तडाकानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥
उपरुध्याऽनुपजपेद्युध्येतैव[5] च तत्कृतम्।

1 वी. मि., p. 402
2 I, 342; वी. मि., p. 402
3 मिताक्षरा., आप्नोति धर्मषड्भागम्
4 VII, 195–197; वी. मि., p. 403
5 Printed texts : उपजप्यानुजपेद् बुध्येतैव च तत्कृतम्। वी. मि., p. 404, explains उपजपेत् as भेदं कुर्यात्

युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥

तथा[1]

एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।
तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥
यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ।
दण्डेनाऽभिप्रसह्यैनं[2] शनकैर्वशमानयेत् ॥

याज्ञवल्क्यः[3]

उपायाः साम दानं च भेदो दण्डस्तथैव च ।
सम्यक्प्रयुक्ताः सिध्येयुर्दण्डस्त्वगतिका गतिः ॥

मनुः[4]

सामादीनामुपायानां चतुर्णामपि पण्डिताः ।
सामदण्डौ प्रशंसन्ति नित्यं राज्याऽभिवृद्धये[5] ॥

मत्स्यपुराणे[6]

सामभेदस्तथा दानं दण्डश्च मनुजोत्तम ।

1 VII, 107-8
2 Printed texts : दण्डेनैव प्रसह्येतां शनकैः वशमानयेत् ; so A. S. B. and I. O. ; वी. मि., दण्डेनाभिप्रसह्यैतान्
3 I, 346 ; 'दण्डस्त्वगतिका गतिः' उपायान्तरसम्भवे सति न प्रयोक्तव्यः ( मिताक्षरा )
4 VII, 109
5 Printed texts : राष्ट्राभिसिद्धये
6 म. पु., ch. 222, 2. 10

उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥
प्रयोगाः कथिताः सप्त तान्मे निगदतः शृणु ।
द्विविधं कथितं साम तथ्यं चाऽतथ्यमेव च ॥
तत्राऽप्यतथ्यं साधूनामाक्रोशायैव जायते ।
तथा साधुः प्रयत्नेन सामसाध्यो नरोत्तम ॥
महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः ।
सामसाध्या न चातथ्यन्तेषु साम प्रयोजयेत् ॥
तथ्यं साम च कर्तव्यं कुलशीलादिवर्णनम् ।
तथा तदुपचाराणां कृतानां चैव वर्णनम् ॥
अनयैव तथा युक्त्या कृतज्ञख्यापनं स्वकम् ।
एवं सान्त्वेन कर्त्तव्या वशगा धर्मतत्पराः ॥
साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः ।
तथाऽप्येतदसाधूनां प्रयुक्तं [1]नोपकारकम् ॥
अतिशङ्कितमित्येवं पुरुषं सामवेदिनम् ।
असाधवो विजानन्ति तस्मात्तत्तेषु वर्जितम् ॥

तथा[2]

परस्परं च ये दुष्टाः क्रुद्धा भीतावमानिताः ।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥
आत्मीयां दर्शयेदाशां परस्माद्दर्शयेद्भयम् ।
एवं हि भेदयेद्भिन्नान् यथावद्वशमानयेत् ॥

1 Udaipur Ms., कोपकारकम्

2 म. पु., ch. 223, 1–7

सङ्गतां हि विना भेदं[1] शक्रेणाऽपि तु दुःसहा ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥
महिषी युवराजश्च तथा सेनापतिर्द्विज ।
अमात्या मन्त्रिणश्चैव राजपुत्रास्तथैव च ॥
अन्तःकोपा विनिर्दिष्टा दारुणा पृथिवीक्षिताम्[2] ।

'अतिशङ्कितं' अतिशयिता शङ्का यस्मिन् स तथा । 'सामवेदिनं' सामप्रयोक्तारम् ।

ब्रह्मपुराणे[3]

स्वपक्षभेदो यत्नेन न कर्तव्यः कदाचन ।
दुर्गं कोशश्च देशश्च परराष्ट्रभयं विना ॥
स्वभेदेनैव नश्यन्ति बद्धमूला अपि प्रजाः ।

'परराष्ट्रभयं विने'ति । स्वपक्षभेदे हि परचक्रभयं विनाऽपि दुर्गादिकं नश्यतीत्यर्थः ।

1 Thus A. S. B.; but Udaipur Ms. and I. O., read : सङ्गता विहिता भेदम्

2. म. पु., p. 471,
अन्तः कोपो बहिः कोपो यत्र स्यातां महीक्षिताम् ।
अन्तः कोपो महांस्तत्र नाशकः पृथिवीक्षिताम् ॥

3 वी. मि., p. 282 ; but the source is omitted in Udaipur Ms. The prose explanation is repeated by वी. मि.

मत्स्यपुराणे[1]

सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् ।
सुदत्तेनेह भवति दानेनोभयलोकजित् ॥
यद्यप्यलुब्धगम्भीराः पुरुषाः सागरोपमाः ।
न गृह्णन्ति तथाऽप्येते जायन्ते पक्षपातिनः ॥
न शक्या ये वशीकर्तुमुपायत्रितयेन तु[2] ।
दण्डेन तान् वशीकुर्याद्दण्डो हि वशकृत्तमः ॥

श्री रामायणे[3]

तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ।
दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ॥
दण्डस्तथैव पात्यश्च नित्यकाले दुरात्मसु ॥

मनुः[4]

साम्ना भेदेन दानेन समस्तैरुत वा पृथक् ।
विजेतुं प्रयतेताऽरीन्न युद्धेन कदाचन ॥
अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ।
पराजयश्च सङ्ग्रामे तस्माद्युद्धं विवर्जयेत् ॥

तथा[5]

त्रयाणामप्युपायानां पूर्वोक्तानां परिक्षये ।

1 वी. मि., p. 282 ; म. पु., ch. 224, 2, 5
2 म. पु., ch. 225, 1 ; वी. मि., p. 283, cites the remaining verses of ch. 224
3 Not to be traced ; but cited in वी. मि., p. 404
4 VII, 198–199 ; मनुः omitted in all manuscripts.
5 VII, 200

तथा युध्येत सम्पन्नो विजयेत रिपून् तथा ॥

तथा[1]

संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥
युध्येत स्यन्दनाश्वेन समे भूपोन्नतद्विपैः[2] ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैस्स्थले ॥
कुरुक्षेत्रांश्च मत्स्यांश्च पाञ्चालान् शूरसेनजान् ।
दीर्घांल्लघूंश्चैव नरान् उग्रानीकेषु योजयेत् ॥
प्रहर्षयेद्बलं व्यूह्य भृशार्त्तांश्च परीक्षयेत् ।
चेष्टाश्चैव विजानीयादारात् योधयतामपि ॥

महाभारते[3]

राज्ञोऽभियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।

राज्ञोऽधिकमित्यनुवृत्तौ गौतमः[4]

सङ्ग्रामे संस्थानमनिवृत्तिश्च ।

यमः[5]

क्षत्रियस्योरसि क्षेत्रं पृष्ठे ब्रह्म प्रतिष्ठितम् ।

1 VII, 191–194

2 Printed texts read : स्यन्दनाश्वैः समे युद्धयेदनूपे नौद्विपैस्तथा ।

3 वी. मि., p. 405, राज्ञां नियोगात्

4 *Ibid*, p. 405 ; गौतम., 10, 15

5 *Ibid*, p. 406

तस्मात्पृष्ठं रणे रक्षेन्मा भवेद्ब्रह्मघातकः[1] ॥

मनुः[2]

समोत्तमाधमै राजा त्वाहूतः समरे परैः ।
न निवर्त्तेत सङ्ग्रामात्क्षत्रधर्ममनुस्मरन् ॥
आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥
न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् ।
न कर्णिभिर्नाऽपि दिग्धैर्नाऽग्निज्वालिततेजनैः ॥

[ परस्परं ] 'मिथः' स्पर्द्धमाना इति शेषः । 'दिग्धैः विषाक्तैः[3] ।

बौधायनः[4]

भीतमत्तोन्मत्तप्रमत्तविसन्नाहस्त्रीबालवृद्धब्राह्मणैर्न युद्ध्येत अन्यत्राऽऽततायिनः[5] ॥

गौतमः[6]

न दोषो हिंसायामाहवे अन्यत्र व्यश्ववसारथ्यायुध-

1 "पृष्ठं रणे रक्षेदि"त्यनेन पलायननिषेधः । ( वी. मि., p. 406 )

2 VII, 87, 89, 90; वी. मि., p. 405

3 Repeated by वी. मि., p. 405

4 बौधा., 1, 18, 11 ( वी. मि., p. 406 )

5 'उन्मत्तः' विरुद्धचेष्टः। 'विसन्नाहो' विगलितकवचादिबन्धः विगतव्यापारो वा । 'आततायी' साहसकारी । ( बौधा. गोविन्दस्वामिविवरण p. 90 )

6 गौतम., 10, 16, 17 ( वी. मि., p. 407 )

कृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढादृते गो-ब्राह्मणवादिभ्यः[1] ।

मनुः[2]

न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् ।
न मुक्तकेशमासीनं न तवाऽस्मीति वादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नाऽयुध्यमानं पश्यन्तं न परेण समागतम् ॥
नाऽऽयुधव्यसनप्राप्तं नार्तं नाऽतिपरिक्षतम् ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥

देवलः[3]

तृणखादी परप्रेप्सुरलसः शरणं गतः ।
षण्डः परार्दितो लिङ्गी स्थविरः पतितः शिशुः ॥
न धर्मयुद्धे हन्तव्या ज्ञेया योधैरनापदि ॥

याज्ञवल्क्यः[4]

य आहवेषु युध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥

1 विशब्दः त्रिभिस्संबध्यते—व्यश्वः, विसारथिः, व्यायुध इति । 'स्थलारुढः' पर्वतारूढः । दूतोऽहं ब्राह्मणोऽहं इति च यो वदति यश्च गोवच्छब्दं करोति । ( मस्करिभाष्य., p. 116 )

2 VII, 91–93 ; वी. मि., p. 406

3 वी. मि., p 407

4 I, 324 ; वी. मि., p. 406 ; मिताक्षरा reads वध्यन्ते but अपरार्के and वी. मि. read युध्यन्ते

देवलः[1]

प्रजार्थं क्षत्रियो युध्येत्स्वान् प्राणान् सम्परित्यजेत् ।
अश्वमेधफलं कृत्स्नं निसर्गेणाऽधिगच्छति ॥
शस्त्रेण निहतः संख्ये द्विषद्भिरपराङ्मुखः ।
शक्रलोकमवाप्नोति स्ववीर्याद्विजितं शुभम् ॥
आहवेऽभिमुखे शूरं प्रहितानि द्विषद्गणैः ।
भिन्द्युर्यावन्ति शस्त्राणि तावन्तः क्रतवोऽस्य ते ॥
क्षतेभ्यः प्रस्रुतं रक्तं क्षितिपांसु सुसंस्पृशेत् ।
स देवलोके तावन्तं कालं तिष्ठति वै ध्रुवम् ॥

नाऽस्ति राज्ञां समरतनुत्यागसदृशो धर्मः । गोब्राह्मण-मित्रधनरक्षणार्थं मृतास्ते स्वर्गलोकभाजः ।

आपस्तम्बः[2]

ब्राह्मणस्वान्यपजिगीषमाणो [ राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति[3] ] ।

1 वी. मि., p. 405

2 2, 26, 2 ; वी. मि., p. 407

3 Mss. corrupt and the śūtras are mixed up with explanations, with lacunae in both. The sentence in the Mss. *which is reproduced* by वी. मि., p. 407, and commented on, as if correct, runs thus :

ब्राह्मणस्वान्यपजिगीषमाणो प्रत्यानेतुमिच्छन् युध्यमानो हन्यते साक्षाद्यज्ञधर्मे इत्यर्थः । Haradatta's commentary on the *sūtra* is as follows ( p. 286 ) :—

'ब्राह्मणस्वानि' चोरादिभिरपहृतानि । 'अपजिगीषमाणः' अपजित्य प्रत्यानेतुमिच्छन्। 'यो राजा' युध्यमानो 'हन्यते' असौ साक्षात् यज्ञधर्म इत्यर्थः।

व्यासः

ये हता निशितैः शस्त्रैः क्षत्रधर्मपरायणाः।
ते गता ब्रह्मसदनं न मेऽत्राऽस्ति विचारणा॥
न यज्ञैर्दक्षिणाभिर्वा न तपोभिर्न विद्यया।
स्वर्गं यान्ति तथा मर्त्त्या यथा योधा रणे हताः॥
न ह्यधर्मोऽस्ति पापीयान् क्षत्रियस्य पलायनात्।
युद्धाद्धि धर्मः श्रेयान्वै पन्थाः स्वर्गस्य विद्यते[1] ॥

याज्ञवल्क्यः[2]

पदानि क्रतुतुल्यानि भग्नेषु विनिवर्त्तनात्।

'ब्राह्मणस्वानि' चोरादिभिरपहृतानि, 'अपजिगीषमाणः' ब्राह्मणेभ्यो दानायाऽपजित्य ग्रहीतुमिच्छन् यो राजा युद्धे चोरैः हन्यते, तम् 'आत्मयूपो' 'अनन्तदक्षिणो' 'यज्ञ' इत्याहुः धर्मज्ञाः। सङ्ग्रामो यज्ञः। तस्यात्मा यूपस्थानीयः। आत्मेति शरीरमाह। अन्तरात्मा तु पशुस्थानीयः। प्रत्यानिनीषितं तु द्रव्यं दक्षिणा। सूत्रे तु 'तं यज्ञ इत्याहुः' इति गौणो वादः।

1 वी. मि., p. 407, "अत्र व्यासवाक्ये 'योधा रणे हता' इति सामान्यत उपादानात्, आपस्तम्बवाक्येऽपि 'युध्यमानो हत' इति उपादानात्, स्थानापत्त्या क्षत्रियातिरिक्तस्याऽपि क्षत्रियवृत्त्या जीवतो युद्धमरणं अत्यन्तं धर्मसाधनं, पलायनं सामर्थ्ये सति गोब्राह्मणादीनां असंरक्षणं चाऽत्यन्तं अधर्मसाधनमिति द्रष्टव्यम्"।

2 I, 325, मिताक्षरा and अपरार्क more correctly read भग्नेष्वविनिवर्तिनाम्।

राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥

मनुः[1]

यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः ।
भर्त्तुर्यद्दुष्कृतं किञ्चित्सर्वं तत्प्रतिपद्यते ॥
यदस्य[2] सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् ।
भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥

पराशरः

पतितं स्वामिनं युद्धे त्यक्त्वा यान्ति पराङ्मुखाः ।
ये तेषां पापबुद्धीनां ब्रह्महत्या पदे पदे ॥

आदित्यपुराणे[3]

सङ्ग्रामे प्रस्थितं भूपं भृत्यस्त्यजति यः क्षणात् ।
स तेन नृपदण्डेन मूढो नरकमृच्छति ॥
जित्वाऽरिं भोगसम्प्राप्तिर्मृतस्य च परा गतिः ।
निष्कृतिः स्वामिपिण्डस्य नाऽस्ति युद्धसमा गतिः ॥
शूराणां यद्विनिर्याति रक्तमाधावतां क्वचित् ।
तेनैव सह पाप्मानं सर्वं त्यजति वै मुने ॥
तथैव विचिकित्सायां वेदना सहते तु याम् ।
ततो नाऽस्त्यधिको लोके तपः परमदारुणम् ॥
मृतस्य नाऽस्ति संस्कारो नाऽऽशौचं नोदकक्रिया ।

1 VII, 94–95

2 Printed texts read : यच्चास्य

3 वी. मि., pp. 408–409

कर्तुमिच्छति यस्येह सङ्ग्रामादधिकं हि किम् ॥
वराप्सरस्सहस्राणि शूरमायोधने हृतम् ।
अभिद्रवन्ति कामार्त्ता मम भर्त्ता भविष्यति ॥
यः सहायान्न परित्यज्य स्वस्थः सन् गन्तुमिच्छति ।
अस्थितस्य च कुर्वन्ति देवाः शक्रपुरोगमाः ॥
शूरस्याऽग्रे यदा विप्र आर्त उत्क्रोशते भृशम् ।
न च तं त्रायते पापाच्छूरो नरकभाग्भवेत् ॥
ब्राह्मणानां गवां चैव रक्षार्थं हन्यते यदि ।
स शूरो जीवितं हित्वा इन्दुलोकं प्रपद्यते ॥

तथा

तोषयित्वा नृपं युद्धे राज्ञां [1]कृत्वाऽग्रतः स्थितः ।
जित्वा न हरति द्रव्यं स नरः स्वर्गमाश्रितः ॥
मृदूनाति यदि राष्ट्राणि यदा न हरते धनम् ।
यदि वध्येत तत्रैव स नरः स्वर्गमाश्रितः ॥

तथा[2]

प्रजार्थे निहता ये च राजानो धर्मतत्पराः ।
अग्निविद्युद्धता ये च सिंहव्याघ्रहताश्च ये ॥
प्राप्नुवन्ति च ते सर्वे पुरीमैरावतीमिमाम् ॥

1 A. S. B., हत्वा ; I. O., हुत्वा

2 वी. मि., p. 408

मनुः[1]

रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः ।
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः[2] ।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥

गौतमः[3]

जेता लभेत साङ्ग्रामिकं वित्तम्, वाहनं तु राज्ञः, उद्धारांश्चाऽपृथग्जये। अन्यत्तु यथार्हं भाजयेद्राजा।

मनुः[4]

जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् ।
प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥

1 VII, 96-97; 'अपृथग्जितं' योधैस्सह सम्पूज्य जितम् (वी. मि., p. 409)

2 "उद्धारदाने च श्रुतिः—"इन्द्रो वै वृत्रं हत्वा" इत्युपक्रम्य "स महान् भूत्वा देवता अब्रवीदुद्धारं समुद्धरत" इति । (कुल्लूकः)

3 10, 19-22 Mss. corrupt: restored from printed text. मस्करिभाष्य, p. 162, explains :—यदि राज्ञा नियुक्तः परं निर्जित्य धनमासादयति स तत्साङ्ग्रामिकं धनं लभेत् । अस्याऽपवादमाह 'वाहनं तु राज्ञः' वाहनं हस्त्यादि । 'तु' शब्दो विशेषवाची । 'अपृथग्जयः' सराजको जयः । तत्रोद्धारो राज्ञः सारद्रव्यम् । वाहनसमुच्चयार्थः चकारः । वी. मि., p. 409. also mangles the quotation.

4 VII, 201-204 ; वी. मि., p. 409

सर्वेषां तु विदित्वैषां सममेव चिकीर्षितम् ।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्वीत तेषां धर्मान् यथोदितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥
आदानमप्रियकरं दानं च प्रियकारकम् ।
अभीप्सितानामर्थानां कालयुक्तं प्रशस्यते ॥

[ 'प्रदद्यात् परिहारान्' ] राजग्राह्यमपि [1]'जनानुरागार्थं किञ्चिदंशं परित्यजेदित्यर्थः । 'प्रमाणानी'ति । यस्मिन्देशे ये धर्मास्ते तथैव पालनीयाः । 'कालयुक्तमि'ति । अप्रियकरमपि कालापेक्षया प्रशस्यत इत्यर्थः ।

विष्णुः[2]

राजा परपुरप्राप्तौ तत्कुलीनमभिषिञ्चयेत् । न राजकुलमुच्छिन्द्यात् अन्यत्राऽकुलीनराजकुलात् ।

1 A. S. B. प्रजा for जन; words in brackets necessary for elucidating the commentary.

2 3, 47–49; वी. मि, p. 411; compare, कौटिलीयार्थशास्त्र, p. 311: न च हतस्य भूमिद्रव्यपुत्रदारानभिमन्येत । कुल्यानप्यस्य स्वेषु पात्रेषु स्थापयेत् । कर्मणि मृतस्य पुत्रं राज्ये स्थापयेत् । एवमस्य दण्डोपनताः पुत्रपौत्रा अनुवर्तन्ते ।

स्वभूमिषु च राजानः तस्मात्साम्नाऽनुपालिताः ।
भवन्त्यनुगुणा राज्ञः पुत्रपौत्रानुवर्तिनः ॥

Jolly, वि. स्मृ., p. 13 reads: परपुरावाप्तौ तु तत्र तत्कुलीनम् ।

कात्यायनः[1]

दुष्टस्याऽपि नरेन्द्रस्य तद्राष्ट्रं न विनाशयेत् ।
न प्रजानुमतो यस्मादन्यायेषु प्रवर्तते ॥

याज्ञवल्क्यः[2]

यस्मिन् देशे य आचारो व्यवहारः कुलस्थितः[3] ।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥

[ अथ पौरुषम् ]

मनुः[4]

सर्वं कर्मेदमायत्तं विधानं दैवमानुषे ।
तत्र[5] दैवमचिन्त्यं च मानुषे विद्यते क्रिया ॥

1 Kane, v. 21 ; वी. मि., p. 411 explains it thus : 'राज्ञोऽन्यायवृत्तौ यतः प्रजानां अनुमतिः न इत्यतो राष्ट्रं न पीडयेदिति सिद्धे येषां अमात्यादीनामनुमत्याऽन्याये प्रवृत्तिः, तान् पीडयेदिति ध्येयम् ।

2 I, 343

3 मिता., and अप., read : कुलस्थितिः; for the first quarter अप, follows the reading–किन्तु यस्मिन् य आचारः

4 VII, 205-210 ; वी. मि., pp. 312-313, which brings पौरुषं under मन्त्र, while कल्पतरु puts it under यात्रा

5 Printed texts read : तयोः for तत्र

दैवमानुषसम्पन्ना यात्रा सर्वार्थसाधिका[1] ।
तस्यामतिशये दैवं वर्तते पौरुषं समम् ॥
केचित् पुरुषकारेण केचिद्दैवेन कर्मणा ।
उभाभ्यां केचिदिच्छन्ति फलं कुशलबुद्धयः ॥
दैवमानुषसद्भावे नार्या गर्भः प्रसिध्यति ।
पुंसा सत्यपि संयोगे दैवाभावे न सिद्ध्यति ॥
न हि दैवमुदासीनं कदाचिदपि मानवम् ।
अर्थानर्थफलेनेह संयुनक्त्यवशं क्वचित् ॥
काकतालीयवद्दैवाद्दृष्ट्वाऽपि निधिमग्रतः ।
न पौरुषादृते तेन विधिना युज्यते पुमान् ॥

श्रीरामायणे[2]

यस्तु नाऽऽरभते कार्यं नरो दैवपरायणः ।
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ॥

तथा[3]

विक्लवो हीनवीर्यो यः सदैवमनुवर्त्तते ।
अविक्लवस्तु तेजस्वी न दैवमनुवर्त्तते[4] ॥

1 The ślokas which follow are not in *Manusmṛti*, but are cited as such by वी. मि., which blindly follows कल्प

2 वी. मि., p. 314 : not found in printed texts.

3 अयोध्याकाण्ड. 23, 16–18

4 Line missing in Udaipur Ms. Kumbakonam and Mylapore *edns.* give this and the two next verses thus :

वीराः सम्भावितात्मानो न दैवं पर्युपासते ।

दैवं पुरुषकारेण यतते यः प्रबोधितुम् ॥
न स दैवविपन्नार्थः कदाचिदवसीदति ।

मत्स्यपुराणे[1]

दैवं पुरुषकारश्च कालश्च पुरुषोत्तम ।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलाय वै[2] ॥

कृषिवृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः ।
वर्षाकाले[3] प्रशस्यन्ते नैवाकाले कथञ्चन ॥

व्यासः[4]

विधिर्विधानं नियतिः स्वभावः
कालो ग्रहा ईश्वरकर्म दैवम् ।
भाग्यानि पुण्यानि कृतान्तयोगः
पर्यायनामानि पुराकृतस्य ॥

दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम् ।
स्मृतः पुरषकारस्तु क्रियते यदिहाऽपरम् ॥

[ इति पौरुषम् ॥ ]

दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥

1 म. पु., ch. 221 ; 8–11 ; वी. मि , p. 314, cites this passage as from विष्णुधर्मोत्तर also.

2 म. पु., and वी. मि., p. 314 , read फलावहम्

3 म. पु., नैवाकाले ; वी. मि., p. 314 , तास्तु काले; The reading in कल्पतरु–"वर्षाकाले" is specially noted by वी. मि., p. 314

4 वी. मि., p. 315

मनुः[1]

सह वाऽपि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः ।
मित्रं हिरण्यं भूमिं वा सम्पश्यंस्त्रिविधं फलम् ॥
पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाऽऽक्रन्दं च मण्डले ।
मित्रादथाऽप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥

विष्णुः[2]

परेणाभियुक्तश्च सर्वात्मना[स्वं] राष्ट्रं गोपायेत् ।

सर्वतश्चाऽऽत्मानं गोपायेत् ।

मनुः[3]

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥
आपदर्थं[4] धनं रक्षेद्दारान् रक्षेद्धनैरपि ।

1 VII, 206–207 ; वी. मि., p. 412 , which comments thus : 'वा' शब्दः पूर्वोक्तयुद्धविकल्पार्थः । 'प्रयत्नतो युक्तः' यातव्येन प्रयत्नेन दूतप्रेषणादिना 'युक्तः' योगं प्राप्तः सन् । 'सह' तेन शत्रुणा सह । 'मित्रं हिरण्यं भूमिं वा त्रिविधं यत्फलं' तत् 'सम्पश्यन्' समीचीनमिति जानानः । तदन्यतरलाभे सन्धिं कृत्वा 'व्रजेत्' स्वपुरं यायात् । 'मण्डलं' द्वादशारिमण्डलम्·······'सम्प्रेक्ष्य' तद्बलाबलं ज्ञात्वा । 'मित्रात्' मित्रत्वं प्राप्तात् यातव्यात् , अथवा अमित्रात् मैत्रीमकुर्वतो ऽयातव्यात् । 'यात्रायाः फलं' शत्रुजयम् । 'सन्धौ वा' मित्रादित्रितय-लाभान्यतरत् । 'अवाप्नुयात्' प्राप्नुयात् ।

2 3, 43 ; वी. मि., p. 412

3 VII, 212–215

4 I. O. and A. S. B., आपदर्थे ; वी. मि. follows text.

आत्मा तु सर्वतो रक्ष्यो[1] दारैरपि धनैरपि ॥
सह सर्वाः समुत्पन्नाः प्रसमीक्ष्याऽऽपदो भृशम् ।
संयुक्तांश्च वियुक्तांश्च सर्वोपायान् जयेद्बुधः ॥
उपेतारं उपेयं च सर्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेताऽऽत्मसिद्धये[2] ॥

इति यात्रा ॥

## अथाऽभिषिक्तस्य कृत्यानि

तत्र मनुः[3]

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियश्च[4] शक्नोति वशे स्थापयितुं प्रजाः ॥

दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां[5] क्रोधजे स्वात्मनैव तु ॥

मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः[6] ।

1 Printed texts : आत्मानं सततं रक्षेत् ; A. S. B., आत्मानं सर्वतो रक्षेत्

2 Printed texts : अर्थसिद्धये for आत्मसिद्धये, which वी. मि., p. 413, adopts.

3 VII, 44–53 ; वी. मि., disperses the verses thus : p. 118, p. 148, p. 147, p. 149

4 Printed texts : जितेन्द्रियो हि

5 वी. मि., p. 148, 'आत्मनैव वियुज्यते' मरणमापद्यत इत्यर्थः ॥

6 वी. मि., p. 148, 'परिवादः' परदोषकथनम् । 'वृथाट्या' वृथा

तौर्यत्रिकं[1] वृथाट्या च कामजो दशको गुणः ॥
पैशुन्यं साहसं द्रोहं ईर्ष्याऽसूयाऽर्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥
द्वयोरप्येतयोर्मूलं यं पूर्वे[2] कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥
पानमक्षाः स्त्रियश्चैव[3] मृगया च यथाक्रमम् ।
एतत् कष्टतरं विद्यात् चतुष्कं कामजे गणे ॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥
सप्तकस्याऽस्य वर्गस्य सर्वस्यैवाऽनुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मनः[4] ॥

अटनम् । 'पैशुन्यं' अनभिव्यक्तदोषाविष्करणम् । 'साहसो' साधोर्बन्धनादिनिग्रहः । 'द्रोहः' ब्रह्मबन्धः । 'ईर्ष्या' परगुणासहिष्णुता । परगुणेषु दोषाविष्करणं 'असूया' । 'अर्थदूषणं' अर्थापहारो देयानामदानं च । 'वाक्पारुष्यं' आक्रोशादि । 'दण्डपारुष्यं' अल्पापराधेऽपि बहुलार्थग्रहणम्, शरीरदण्डो वा । Mitramisra reproduces these comments from Kullūka.

1 वी. मि., p. 148 : 'तौर्यत्रिकं' नृत्यगीतवाद्यानि । एतत्त्रिकमादाय दश कामजानि व्यसनानि ।

2 Printed texts : सर्वे for पूर्वे

3 Udaipur Ms. has omitted the next three lines, and joined the second half of the fourth to this line. Corrected by A. S. B. and I. O., as well as by the printed texts.

4 Printed texts : आत्मवान्

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।
व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः[1] ॥

महाभारते

पानमक्षास्तथा[2] नार्यो मृगया गीतवादिते ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥
यस्तु संसेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥
न कामपर एव स्यात् सर्वान् सेवेत सर्वदा[3] ।
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् ॥
धर्मार्थौ यः समुत्सृज्य काममेवाऽनुवर्त्तते ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव[4] ॥
तस्माद्धर्मप्रधानेन सेव्योऽर्थः संयतात्मना ।
विश्वासयित्वा भूतानि साम्ना समुपरामयेत् ॥
धर्मार्थकामसंयुक्तः सोऽमुत्रेह च नन्दति ॥

1 वी. मि., p. 149 : 'अधोऽधो व्रजति' नरकं प्रतिपद्यत इत्यर्थः । नरकाणां पाताल एव वर्णितत्वात् ।

2 A. S. B. and I. O., पानमक्षास्तथा

3 Compare कौटिलीयार्थशास्त्र ( Mysore *edn.* ) p. 12 : "धर्मार्थाविरोधेन कामं सेवेत । न निस्सुखः स्यात् । समं वा त्रिवर्गमन्योन्यानुबन्धम् । Compare also वात्स्यायनीयकामसूत्रम् ( *ed.* Durgāprasād ), p. 27

4 Line omitted by I. O.

तथा

ऊषरेष्वपि वर्षन्तं पात्रेषु मृदुवार्षिणम्[1]।
पर्जन्यमपि निन्दन्ति किं पुनर्वसुधाधिपम् ॥

तथा

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः[2] ।
दाता नाऽपात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥

विष्णुः[3]

आयद्वाराणि नोच्छिन्द्यान्नाऽपात्रवर्षी स्यात् ।

'आयद्वाराणि' द्रव्योत्पत्तिस्थानानि[4] ।

मत्स्यपुराणे[5]

व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत्[6] ।

1 Omitted by I. O. ; cited by वी. मि., p. 126

2 वी. मि., p. 125

3 3, 53

4 Nanda Pandita reads : आयद्वाराणि for आयद्वाराणि and explains it thus : 'स्वपुरे परपुरे दुर्गेषु वा 'आयद्वाराणि' पूर्वराजकृतानि तोरणगोपुरादीनि' । वी. मि., p. 125 explains : 'आयद्वाराणि' द्रव्योत्पत्तिस्थानानि खनिशुल्कप्रभृतीनि ।

5 म. पु., ch. 220. The verses are quoted in the text in a different order from that in म. पु.

6 वी. मि., p. 147 , which attributes them to विष्णुधर्मोत्तर also.

लोकसङ्ग्रहणार्थाय कृतकव्यसनी भवेत् ॥

तथा

अर्थस्य दूषणं राजा द्विःप्रकारं विवर्ज्जयेत् ।
अर्थानां दूषणं चैकं तथैवाऽर्थेन दूषणम् ॥

प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया ।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥

अदेशकाले यद्दानमपात्रे दानमेव च ।
अर्थैस्तु दूषणं प्रोक्तमसत्कर्मप्रवर्तनम् ॥

कामः[1] क्रोधो मदो मानो लोभो हर्षस्तथैव च ।
जेतव्यो रिपुषड्वर्ग आन्तरः पृथिवीक्षिता ॥

एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः ।
कृत्वा भृत्यजयं राजा पौरजानपदान् जयेत् ॥

कृत्वा च विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ।
न राज्ञा मृदुना भाव्यं मृदुर्हि परिहीयते[2] ॥

न भाव्यं दारुणेनाऽपि तीक्ष्णादुद्विजते जनः ।
भृत्यैः सह महीपालः परिहासं विवर्ज्जयेत् ॥

भृत्याः परिभवन्तीह नृपं हर्षवशं गतम् ॥

मनुः[3]

अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च ।

1 All that follows to "उशनाः" below is omitted by I. O.

2 A. S. B., परिभूयते, which is म. पु. (220, 22) reading.

3 IX, 419

आयव्ययौ च नियतावाकरान् कोशमेव च ॥

याज्ञवल्क्यः[1]

धर्मेणाऽलब्धमीहेत लब्धं यत्नेन पालयेत्[2] ।
पालितं वर्द्धयेन्नित्यं वृद्धं पात्रेषु निक्षिपेत् ॥

उशनाः

आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे वाऽथ वचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्धौ सदा युक्त आत्मशुद्धौ तथैव च ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥

महाभारते

सदाऽधिगच्छेद्विनयं विनीतात्मा हि पार्थिवः ।
विनीतात्मा हि नृपतिर्न क्वचित्परिभूयते ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥
ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।

1 I, 317

2 मिता., and अप., read : 'अलब्धमीहेद्धर्मेण' ; Udaipur Ms. reads : धर्मेण लब्धं, but the sense as shown by मिताक्षरा is 'अलब्धलाभाय धर्मशास्त्रानुसारेण ईहेत' compare मनु., VII, 101 :—

अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया ।
रक्षितं वर्द्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥

विद्यानां ग्रहणं कार्यं यथान्यायं नराधिपः ॥
त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं प्रयोक्तृतः ।
आन्वीक्षिकीं तर्कविद्यां वार्तारम्भांश्च लोकतः ॥
सर्वः सर्वं न जानाति सर्वज्ञो नाऽस्ति कश्चन[1] ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥
अप्युत्तमान् प्रलपतो बालाच्च परिजल्पतः ।
सर्वतस्सारमादद्यादश्मभ्य इव काञ्चनम् ॥
धनुर्वेदेतिहासे च यत्नः कार्यो विजानता ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥
द्वौ भागावितिहासार्थं भागस्त्रय्यां विधीयते ।
इष्वस्त्रादिषु भागोऽन्यः चतुर्द्धैवमहः स्मृतम् ॥
येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
तान्सेवेत्तैः सहास्या हि शास्त्रेभ्योऽपि गरीयसी ॥
गुरुपूजां च सततं वृद्धानां पर्य्युपासनम् ।
श्रवणं चैव विद्यानां कुर्वन् श्रेयोऽधिगच्छति ॥
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ विदितुं शक्यौ बृहस्पतिसमैरपि ॥
विद्यावृद्धान् [2]सदैव त्वमुपासीथा नराधिप ।
शृणुया यच्च ते ब्रूयुः कुर्याश्चैवाऽविचारयन् ॥
सहस्रमपि मूर्खाणां यद्युपास्ते महीपतिः ।

1 Cited in वी. मि., pp. 131–133

2 From here there is a big lacuna in I. O.; A. S. B. is corrupt in this śloka.

अथवाऽप्ययुतान्येव नाऽस्ति तेषु सहायिता ॥
एकोऽपि शास्त्रवित्प्राज्ञो गुरूणां पर्युपासितः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥
सदैव हितकामानां सुहृदां न श्रृणोति यः ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥
आदावेव मनुष्येण वर्तितव्यं यथाक्रमम् ।
तथा नाऽतीतमर्थं वै पश्चात्तापेन शोचति ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यतीह सः ॥
सन्नियच्छति यो वेगमुत्थितं कामहर्षयोः ।
स श्रियो भाजनं राजन् पश्चाद्यस्तु न मुह्यति ॥
नाऽवमान्या बुद्धिमद्भिर्नावरोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति मदं क्वचित् ॥
अवृत्तेर्भयमन्त्यानां[1] मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोको न प्रसीदति ॥

यो नोद्धतं जातु करोति वेषं
न पौरुषेणाऽपि विकत्थते च ।
नात्याह किञ्चित् क्षमते विवादं
सर्वत्र तादृक् लभते प्रशंसाम् ॥

1 वी. मि., p. 133 : 'अन्त्यानां' अधमानां मर्त्यानाम् । 'अवृत्तेः' जीविकानाशात् भयम् ।

राज्ञोऽधिकमित्यनुवृत्तौ गौतमः[1]

योगश्च विजये भये विशेषेण चर्या च रथधनुर्भ्याम् ।

'योगः'[2] उद्योगः । 'विजये' आत्मेन्द्रियामात्यादीनां वशीकारेऽभियोगः कार्यः । 'भये' विशेषेण अन्येनाऽभिभवे उपस्थिते तद्रक्षणार्थं विशेषेणोद्यमः कर्तव्यः । 'चर्या' पर्यटनम् । तद्वाहनायुधवता कर्तव्यमित्यर्थः ।

मनुः[3]

नित्यमुद्धृतदण्डः[4] स्यान्नित्यं विधृतपौरुषः ।
नित्यं संवृतसञ्चार्यो[5] नित्यं छिद्रानुसार्यरेः ॥
नित्यमुद्धृतदण्डस्य कृत्स्नमुद्विजते जगत् ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥
अमाययैव वर्त्तेत न कथञ्चन मायया ।

1 10, 12-14 ; वी. मि., p. 133

2 Lacuna in I. O. ; मस्करिभाष्य., explains :-अलब्धलाभो 'योगः' । वाल्लभ्यादिना वैराटविकादिभिः करो न दत्तः तान् यत्नतो गृह्णीयादित्यर्थः । चकारात् लब्धपरिरक्षणं च । 'भयं' अन्याभिभवः । तस्मिन् विशेषेणाऽत्यन्तं योगक्षेमौ कर्तव्यौ । 'चर्या' राष्ट्रस्य सर्वतोऽटनम् । 'रथ'ग्रहणं हस्त्यश्वादिवाहनोपलक्षणम् । 'धनु'र्ग्रहणम् खड्गादीनाम् । चकारादेकस्मिन्नवस्थानं च । चर्यावस्थानयोः व्यवस्था कार्यवशाद्द्रष्टव्या । ( pp. 160-161 )

3 VII, 102-106 ; वी. मि., pp. 133-4

4 Printed texts : उद्यतदण्डः and विवृतपौरुषः

5 *Ibid*, संवार्यो

बुध्येताऽरिप्रयुक्तां च मायां नित्यं सुसंवृतः[1] ॥
नाऽस्य छिद्रं परो विद्याच्छिन्द्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाऽङ्गानि रक्षेद्विवरमात्मनः ॥
बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चाऽनुलिम्पेत[2] शशवच्च विनिष्पतेत् ॥

तथा[3]

तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः ।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः ॥

राजेत्यनुवृत्तौ विष्णुः

सुदर्शनश्च स्याद्विषघ्वागदमन्त्रधारी च नाऽपरीक्षितमु-पयुञ्ज्यात्स्मितपूर्वभाषी [4]स्याद्वध्येष्वपि न भ्रुकुटिमाचरेत् ।

'अगदः' औषधम् ।

मत्स्यपुराणे[5]

शौण्डीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः ।
जना उद्वेगमायान्ति सदा दुःखविभाविताः ॥
अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ॥

1 Printed text: स्वसंवृतः
2 *Ibid*, अवलुम्पेत
3 VII, 140
4 A. S. B., वध्येष्वपि
5 म. पु., ch. 220, ( p. 468 )

रागे दर्पे च माने च क्रोधे पापे च कर्मणि।
अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते ॥
नाऽऽरोहेत्कुञ्जरं व्यालं नाऽदान्तं तुरगं तथा।
नाऽविज्ञातां स्त्रियं गच्छेन्नैव देवोत्सवे वसेत् ॥

शङ्खलिखितौ[1]

राजा स्वस्वाधीनवृत्तिरात्मप्रत्ययकोशः स्वयं कृत्यानुदर्शी विप्रस्वनिवृत्तश्चिरं भद्राणि पश्यति।

यमः[2]

याचितो नेति न ब्रूयाद्दीक्षितो नाऽनृतं वदेत्।
सङ्ग्रामे न निवर्त्तेत तं देवाः क्षत्रियं विदुः ॥
दाता यज्वा च शूरश्च देवद्विजपरायणः।
समः सर्वेषु भूतेषु चिरं पालयते महीम् ॥

मार्कण्डेयपुराणे[3]

अहो तितिक्षा माहात्म्यं अहो दानफलं महत्।
पद्व्यां गतो हरिश्चन्द्रः पुरश्चेन्द्रत्वमागतः ॥

यमः

अन्तर्दोषं समुत्पन्नमाकारेणोपलक्षयेत्।
शंक्येषु शङ्कितो नित्यं रक्षेच्छक्त्या सदोत्थितः ॥
पापानां निग्रहं कुर्यात्साधूनां परिपालनम्।

1 वी. मि., p. 134

2 वी. मि., p. 136

3 8, 268 ( *ed.* Jibānanda ) ; वी. मि., p. 135

यथाक्रमं च वृद्धानां काले काले निषेवणम् ॥

शङ्खलिखितौ[1]

स्वपक्षे परपक्षे च स्थानवृद्धिक्षयाश्रयः ।
स्थानादीनां विभागश्च काले द्रव्यार्थसङ्ग्रहः ॥

मनुः[2]

सङ्ग्रामेष्वनिवर्तित्वं[3] प्रजानां परिपालनम् ।
ब्राह्मणानां च शुश्रूषा राज्ञो निःश्रेयसं परम् ॥

नारदः[4]

सतामनुग्रहो नित्यमसतां निग्रहस्तथा ।
एष धर्मः स्मृतो राज्ञामर्थश्चापि भवेत्ततः[5] ॥

तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाऽभिरक्षणम् ॥

यमः[6]

समः सर्वेषु भूतेषु नयानयविशारदः ।
नैकः कार्याणि यः कुर्यात्सोऽत्यन्तं याति मेदिनीम् ॥

1 वी. मि., p. 135 , where the verse is explained.

2 VII, 88

3 Printed texts read : प्रजानां चैव, and राज्ञां श्रेयस्करं परम्

4 XVII, 17 ; वी. मि., p. 135

5 Jolly ( p. 218 ) reads अर्थश्चामित्रपीडनात् for अर्थश्चापि भवेत्ततः

6 वी. मि., p. 134

तथा

पर्जन्यमिव भूतानि महाद्रुममिवाऽण्डजाः ।
भृत्या यमुपजीवन्ति स राजा शक्रलोकभाक् ॥

कात्यायनः[1]

गच्छेत्सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पार्द्धं तु न संशयः ॥

ब्रह्मपुराणे[2]

नित्यं राज्ञा समुत्थाय पूजनीयाः सुरद्विजाः ।
वह्निसम्पूजनं कार्यं द्रष्टव्यं चन्दनं घृतम् ॥
श्रोतव्ये तिथिनक्षत्रे कर्त्तव्यं वैद्यभाषितम् ॥

शङ्खलिखितौ[3]

राज्ञः प्रत्यहं घृतान्वीक्षणं, मङ्गलदर्शनं, कपिलाप्रदानं, स्वलङ्कृतस्य सम्भाषणं, वैद्यदर्शनं, सप्रहासं सविकल्पं विनयपूर्वं वृद्धेषु ।

याज्ञवल्क्यः[4]

ऋत्विक् पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ॥

1 Kane, 10
2 वी. मि., p. 158
3 वी. मि., p. 158, which omits the second half.
4 I, 332-333 ; वी. मि., p. 158

नैवेशिकानि च ततः श्रोत्रियाणां[1] गृहाणि च ॥

सभामित्यनुवृत्तौ बृहस्पतिः[2]

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविनः ।
पश्येत्सुरान् स धर्मार्थशास्त्राणि शृणुयात्तथा ॥

मनुः[3]

स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणां च राजा सृष्टो हि रक्षिता[4] ॥
तेन यद्यत्सभृत्येन कर्तव्यं रक्षता प्रजाः ।
तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्वशः ॥
ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान्विदुषस्तिष्ठेत्तेषां च शासने ॥
वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।
वृद्धसेवी च सततं रक्षोभिरपि पूज्यते ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥
वनस्थाश्चैव[5] राज्यानि विनयात्प्रतिपेदिरे ॥

1 मिता., reads : श्रोत्रियेभ्यः ; अप., follows the reading श्रोत्रियाणाम्

2 वी. मि., p. 158 : 'तां' सभाम् । 'सुरान्' भूसुरान् । पूर्ववाक्ये तत्रस्थान् ब्राह्मणानित्युपादनात् ।

3 VII, 35–43

4 Printed texts : अभिरक्षिता

5 Printed texts : वनस्था अपि

बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः ॥
वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ।
सुदाः पैजवनश्चैव सुमुखो निमिरेव च ॥
पृथुश्च विनयाद्राज्यं प्राप्तवान्मनुरेव च ।
कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥
त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च सर्वतः[1] ॥

याज्ञवल्क्यः[2]

कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।
व्यवहारान् ततो दृष्ट्वा [3]श्रुत्वा भुञ्जीत कामतः ॥

मनुः[4]

एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ।
व्यायम्याऽऽप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत् ॥
तत्राऽऽत्मभूतैः कालज्ञैः आहार्यैः परिचारिकैः ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥

1 Printed texts : लोकतः for सर्वतः, which is in accordance with अर्थशास्त्र ; cf. कौटिलीयार्थशास्त्र, ( Mysore *edn.* ) p. 10 : "वृत्तोपनयनः त्रयीं आन्वीक्षकीं च शिष्टेभ्यः, वार्तां अध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः"

2 I, 327

3 अप., and मिता., read 'स्नात्वा' for 'श्रुत्वा'

4 VII, 216–220 ; वी. मि., pp. 160–1

विषघ्नैरुदकैश्चाऽस्य[1] सर्वद्रव्याणि नेजयेत् ।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा ॥
परीक्षिताः स्त्रियश्चैनं व्यञ्जनोदकधूपनैः ।
वेषाभरणसंयुक्ताः[2] संस्पृशेयुः समाहिताः ॥
एवं प्रयत्नं कुर्वीत यानशय्यासनाशने ।
स्नाने प्रसाधने चैव सर्वालङ्कारकादिषु[3] ॥

मत्स्यपुराणे[4]

विषाच्च रक्ष्यो नृपतिस्तत्र युक्तिं निबोध मे ।
क्रीडानिमित्तं नृपतिर्धारयेन्मृगपक्षिणः ॥
अन्नं वै प्राक् परीक्षेत वह्नौ चाऽन्यतमेषु च ।
वस्त्रं पत्रमलङ्कारं भोजनाच्छादनं तथा ॥
नाऽपरीक्षितपूर्वन्तु स्पृशेदपि महीपतिः ।
श्यावास्यचक्रः सन्तप्तः सोद्वेगं च निरीक्ष्यते ॥

'श्यावास्यचक्रः' ईषत्कृष्णश्वेतमुखमण्डलः ।

विषादो वा विषं दत्वा यत्र तत्र निरीक्षते[5] ॥

1 Printed texts read : अगदैः for उदकैः and योजयेत् for नेजयेत्

2 *Ibid.*, संशुद्धाः स्पृशेयुः सुसमाहिताः ; A. S. B. reads सम्मृशेयुः समाहिताः

3 *Ibid.*, अलङ्कारकेषु च

4 म. पु., ch. 219, 8–34 ; वी. मि., pp. 162–163. Compare Kautilya, *Arthas'āstra* , I. ch. XXI.

5 म. पु., ch. 219, 11 : विषदोऽस्य विषं दत्तं तच्च तत्र परीक्षते ।

स्रस्तोत्तरीयो विमनाः स्तम्भकुड्यादिभिस्तथा ।
प्रच्छादयति चाऽऽत्मानं लज्जति स्खलते तथा[1] ॥
भुवं विलेखति ग्रीवां तथा चालयति द्विजान्[2] ।
कण्डूयति च मूर्द्धानं परिलक्ष्यो नरः सदा[3] ॥
क्रियासु त्वरितो राजन् विपरीतास्वपि ध्रुवम् ।
एवमादीनि चिह्नानि विषदस्य परीक्षयेत् ॥
ततो[4] विचारयेदग्नौ तदन्नं त्वरयाऽन्वितः ।
इन्द्रायुधसवर्णोऽग्निरूक्षः स्फोटसमन्वितः ॥
एकवर्णोऽथ दुर्गन्धि भृशं चटचटायते ।
तद्धूमदर्शनाज्जन्तोः[5] शिरोरोगश्च जायते ॥
सविषेऽन्ने विलीयन्ते न च पार्थिव मक्षिकाः ।
निलीनाश्च विपद्यन्ते दृष्टे च सविषे तथा ॥
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम ।
विकृतिं च स्वरो याति कोकिलस्य तथा नृप ॥
गतिस्स्खलति हंसस्य भृङ्गराजश्च कूजति ।
क्रौञ्चो मदमथाऽभ्येति कृकवाकुर्विरौति च ॥
विक्रोशति शुको राजन् सारिका वमते तथा ।
चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा ॥
मेहते वानरो राजन् ग्लायते जीवजीवकः ।

1 म. पु., p. 466 , त्वरते for स्खलते
2 *Ibid.*, तथा चालयते नृप
3 *Ibid.*, परिलोड्याऽऽननं तथा ।
4 *Ibid.*, समीपे विक्षिपेद्वह्नौ
5 *Ibid.*, तद्धूमसेवनात्

हृष्टरोमा भवेद्भ्रुः पृष्ठतश्चैव रोदिति ॥
हर्षमायाति च शिखी विषसन्दर्शनान्नृपः ।
अन्नं च सविषं राजन् चिरेण च विपच्यते ॥
तथा भवति साश्रावं पक्वं पर्युषितोपमम्[1] ।
व्यापन्नरसगन्धं च चन्द्रिकाभिस्तथा युतम् ॥
व्यञ्जनानां च शुष्कत्वं द्रवाणां बुद्बुदोद्भवः ।
ससैन्धवानां द्रव्याणां जायते फेनमालिका ॥
सस्यराजिश्च ताम्रा स्यान्नीला च पयसस्तथा ।
कोकिलाभा च मद्यस्य तोयस्य च नृपोत्तम ॥
धान्याम्लस्य तथा कृष्णा कपिला कोद्रवस्य च ।
मधुश्यामा च तक्रस्य नीलपीता तथैव च ॥
घृतस्योदकसंकाशा कपोताभा च मस्तुनः ।
हरिता माक्षिकस्याऽपि तैलस्य च तथाऽरुणा ॥
फलानामप्यपक्वानां पाकः क्षिप्रं प्रजायते[2] ।
प्रक्लेदश्चैव पक्वानामाम्लानां म्लानता तथा ॥
मृदुता कठिनानां च मृदूनां च विपर्ययः ।
सूक्ष्मतन्तूपसदनं तथा चैवाऽतिरोमता[3] ॥
श्याममण्डलता चैव वस्त्राणां च विशेषतः ।
लोहानां च मणीनां च मलपङ्कोपदिग्धता ॥

1 म. पु., p. 467 : तदा भवति निश्श्राव्यं पक्षपर्युषितोपमम् ।

2 Omitted by Udaipur Ms. : supplied by I. O. and A. S. B.

3 म. पु., p. 467 : सूक्ष्माणां रूपदलनं तथा चैवाऽतिरञ्जता ।

अनुलेपनगन्धानां[माल्या]नां[1] च नृपोत्तम ।
विगन्धता च विज्ञेया पर्णानां म्लानता तथा ॥
[ पीतावभासता ज्ञेया तथा राजन् जलस्य तु ।
दन्ता ओष्ठौ त्वचः श्यामः तनुसत्वास्तथैव च[2] ॥ ]
एवमादीनि चिह्नानि विज्ञेयानि नृपोत्तम ।
तस्माद्राजा सदा तिष्ठेन्मणिमन्त्रौषधागदैः ॥
उक्तैः संरक्षितो राजा प्रमादपरिवर्जकः ॥

प्रजातरोर्मूलमिहाऽवनीश-
स्तद्रक्षणाद्वृद्धिमुपैति राज्यम्[3] ।
तस्मात्प्रयत्नेन नृपस्य रक्षा
सर्वेण कार्या रविवंशचन्द्र ॥

मनुः[4]

भुक्तवान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च तथा कालं पुनः कार्याणि चिन्तयेत् ॥
अलङ्कृतस्तथा पश्येदायुधीयं पुनर्जनम् ।
वाहनानि च सर्वाणि वस्त्राण्याभरणानि च ॥

याज्ञवल्क्यः[5]

हिरण्यं व्यापृतानीतं भाण्डागारे न्यसेत्ततः[6] ।

1 Gap in both A. S. B. and I. O., which give-नाना
2 [ ] Omitted in Mss. and in वी. मि., p. 164
3 म. पु., p. 467, वृद्धि for राज्यम्
4 VII, 221-222 ; वी. मि., p. 167
5 I, 328-330
6 मिता., reads 'भाण्डागारेषु निक्षिपेत' but अप., follows the

पश्येच्चोरान् [1]तथा दूतान् प्रेषयेन्मन्त्रिसङ्गतः ॥
ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥

सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।
गीतनृत्ये[2] च युञ्जीत पठेत्स्वाध्यायमेव च ॥

मनुः[3]

सन्ध्यामुपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥
गत्वा कक्षान्तरं त्वन्यत् समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं तु स्त्रीवृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः ।
संविशेच्च यथाकालमुत्तिष्ठेच्च गतक्लमः ॥

शङ्खलिखितौ[4]

राज्ञः शङ्खपटहतूर्येण प्रस्वापोत्थानम् ।

याज्ञवल्क्यः[5]

संविशेत्तूर्यघोषेण प्रतिबुध्येत्तथैव च ।

text : वी. मि., p. 167 explains 'व्यापृतानीतं' व्यापृतैराकरादिद्रव्यार्जनस्थानेषु नियुक्तैरानीतम्

1 मिता., reads तथा for ततः, but अप., follows the text.

2 मिता., and अप., read गीतनृत्यैश्च ; वी. मि., भुञ्जीत for युञ्जीत. 'स्वाध्यायं' वेदमिति वी. मि.

3 VII, 223–225 ; वी. मि., p. 167–168

4 वी. मि., p. 154

5 I, 331–332 ; वी. मि., p. 154

शास्त्राणि चिन्तयेद्‍बुद्ध्वा सर्वकर्तव्यतां तथा[1] ॥
प्रेषयेच्च ततश्चारान् स्वेष्वन्येषु च सादरम् ॥

'स्वेषु' स्वसामन्तादिषु । 'अन्येषु' महीपतिषु[2] ।

मनुः[3]

एतद्‍वृत्तं समातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतन्मन्त्रिमुख्ये निवेशयेत् ॥

कात्यायनः[4]

शौर्यविद्यार्थबाहुल्यात्प्रभुत्वाच्च विशेषतः ।
सदा चित्तं नरेन्द्राणां मोहमायाति कारणात् ॥
तस्माच्चित्तं प्रबोद्धव्यं राजधर्मे सदा द्विजैः ।
पवित्रं परमं पुण्यं श्रुतिवाक्यं[5] न लङ्घयेत् ॥

1 मिता., and अप., read सर्वकर्तव्यतास्तथा ; मिता., and वी. मि., read बुध्या for बुद्ध्वा, but अप., follows the text and adds the explanation 'ब्राह्मे मुहूर्ते बुद्ध्वा'

2 मिता., gives the identical explanation ; अप., interpretes अन्येषु as अमित्रादिषु राजसु, restricting the despatch of spies to enemy dominions. वी. मि., p. 154 copies the comment in कल्पतरु

3 VII, 226

4 Kane , 4–5 ; वी. मि., p. 136

5 A. S. B., स्मृतिवाक्यं ; so वी. मि., p. 120 ; 'द्विजैः' करणभूतैः, राज्ञा स्वचित्तं राजधर्मे प्रबोद्धव्यम् ।

विष्णुः[1]

राजा सर्वेषु कार्येषु सांवत्सराधीनः स्यात्[2] ।

तथा

शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत् । परचक्रोपघातांश्च शस्त्रनित्यतया ।

वेदेतिहासधर्मशास्त्रकुशलं कुलीनमव्यङ्गं तपस्विनं च पुरोहितं [ वरयेत् ] ।

'शस्त्रनित्यतया' शस्त्राभ्यासपरत्वेन[3] ।

गौतमः[4]

ब्राह्मणं च पुरोदधीत । विद्याभिजनवाग्रूपवयश्शील-

1 3, 75

2 Mss. read incorrectly सांवत्सरीकाधीनः

3 वि. स्मृ., 67–70 ; the last sūtra ends with वरयेत्, वी. मि., p. 137 omits, following *Kalpataru*.

4 11, 12–20 , and वी. मि , p. 136 ; मस्करिभाष्य ( pp. 180–182 ) comments thus :—

"ब्राह्मणं 'पुरः' अग्रे सर्वकार्येषु कुर्यात् । च शब्दात् सेनापतिं च कुर्यात् । 'विद्या' शब्देन अथर्ववेद उच्यते, स एव शान्त्यादिकर्मसमर्थ इति । 'अभिजनः' चारित्रं, तद्वान् कार्ये प्रवर्तत इति । 'शीलसम्पन्नः' क्षमायुक्तः । 'न्यायवृत्तः' अविरुद्धलोकाचारोपेतः । 'तपस्वी' ऋतावेव गमनशीलः । 'तत्' शब्दः सर्वसहायोपसङ्ग्रहार्थः । 'प्रसूतः' अभ्यनुज्ञातः । 'कर्माणि' दृष्टादृष्टार्थानि । 'हि' शब्दो यस्मादर्थे । 'ऋध्यते' अवश्यं तत्फलेन युज्यते । 'न व्यथते' अन्यथा न भवति । 'इति च' शब्दौ श्रुतिद्वयसूचनार्थम् । विचार्य एव कर्तव्यानीत्येवमर्थः । 'दैवचिन्तकाः' ज्योतिश्शास्त्रविदः । 'उत्पातचिन्तकाः' शकुननिमित्तज्ञाः । 'तान्या-

सम्पन्नम्। न्यायवृत्तं तपस्विनम्। तत्प्रसूतः कर्माणि कुर्वीत। ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते। यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत। तदधीनमप्येके योगक्षेमं प्रतिजानते। शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात्। यथोक्तमृत्विजोऽन्यानि।

'तत्प्रसूतः' तदनुज्ञातः। 'संवननं' वशीकरणम्। 'द्विषद्व्यृद्धिः' शत्रूणामृद्ध्यभावः[1]।

द्रियेत' श्रद्दधीत। तच्छब्देन दैवोत्पातकचिन्तकवचनम्, तदायत्तम्। योगक्षेमम्, अलब्धलाभो 'योगः'। लब्धस्य रक्षणं 'क्षेमः'। 'प्रतिजानते' प्रतिज्ञां कुर्वन्ति। संयुक्तशब्दः प्रत्येकमभिसम्बध्यते। 'आभ्युदयिकानि' अभ्युदयहेतुत्वात्। विगता ऋद्धिः 'व्यृद्धिः' द्विषतो व्यृद्धिः 'द्विषद्व्यृद्धिः', तया युक्त येनाऽस्य परो विगतैश्वर्यो भवति। उपरि ऋत्विग्ग्रहणात् एतानि पुरोहितः कुर्यात् 'शालाग्नौ', च शब्दात् लौकिके च। पुत्रकामेष्ट्यादीनि अन्यानि यथोक्तं ऋत्विजः कुर्युः।

1 वी. मि., pp. 136–7 gives the following further explanation : 'पुरोदधीत' पुरोहितं कुर्यात्। 'तत्प्रसूत' इत्यत्र तच्छब्दानुकर्षणीयत्वेन ब्राह्मणो निर्दिश्यते—ब्रह्मप्रसूतमिति। 'ऋध्यते' समृद्धो भवति। 'विज्ञायते' परम्परया दृश्यते। 'तदधीन' दैवोत्पातचिन्तकैः ज्योतिर्विद्भिः यद्ग्रहवैकृतादौ कर्तव्यत्वेनोक्तं तस्यायत्तम्। 'योगक्षेमं' इत्यत्र समाहारद्वन्द्वेन नपुंसकत्वैकवद्भावश्च। 'शान्तिः' ग्रहशान्तिमहाशान्त्यादयः। 'पुण्याहं' दिनदोषनाशाय विवाहादौ क्रियमाणम्। 'स्वस्त्ययनं' यात्रादौ क्रियमाणम्। 'आयुष्यसंयुक्तम्' जन्मनक्षत्रादौ आयुर्वृद्ध्यर्थं क्रियमाणं दूर्वाहोमादि। 'मङ्गलं' गृहप्रवेशादौ क्रियमाणं वास्तुहोमादि। एतान्यभ्युदयहेतुत्वात् 'आभ्युदयिकानि'। 'विद्वेषणं' येन अस्य शत्रुः प्रकृतीनां द्वेष्यो भवति तत्।

ब्रह्मपुराणे[1]

द्वौ लक्षहोमौ कुर्वीत तथा संवत्सरं प्रति ।
एकं च कोटिहोमं च यत्नात्सर्वाभयप्रदम् ॥
अथर्ववेदविधिना समन्त्री सपुरोहितः ।
नित्यान्याहार्यकाम्यानि तथा नैमित्तिकानि च ॥
ग्रहणे सूर्यशशिनोर्भूकम्पोत्पातदर्शने ।
तत्क्षणे च महाशान्तिः कर्तव्याऽनिष्टनाशिनी ॥

याज्ञवल्क्यः

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा[2] ॥

महाभारते[3]

पुरोहितप्रधानो हि राजा हितमवाप्नुयात् ।
सदाऽऽचरति यो धर्मं नृपो ब्राह्मणदेशितम् ॥
तावता स कृतप्रज्ञश्चिरं यशसि तिष्ठति ।
तस्य धर्मस्य सिद्धस्य भागी राज्ञः पुरोहितः ॥

याज्ञवल्क्यः[4]

श्रौतस्मार्तक्रियाहेतोर्वृणुयाहत्विजस्तथा ।

1 वी. मि., p. 138

2 I, 313 ; वी. मि., p. 137 omissions supplied by I. O. and A. S. B ; मिता., reads पुरोहितं प्रकुर्वीत, but अप., adopts the reading in the text.

3 वी. मि., p. 138 reads सत्कृतप्रज्ञः for स कृतप्रज्ञः

4 I, 314-315 ; वी. मि., p. 138 ; मिता., and अप., read वृणुयादेव चर्त्विजः

यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥

मनुः[1]

आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत् ।
विप्राणामक्षयो ह्येष निधिर्ब्राह्मो विधीयते ॥
न तं स्तेना न चाऽमित्रा हरन्ति न च नश्यति ।
तस्माद्राज्ञा विधातव्यो ब्राह्मणेष्वक्षयो निधिः ॥
न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ।
वरिष्ठमग्निहोत्राद्धि ब्राह्मणस्य मुखे हुतम् ॥

कात्यायनः[2]

अक्लेशेनाऽर्थिने यस्तु राजा सम्यङ्निवेदयेत् ।
तत्तारयत्यनन्तं स्याद्धर्मार्थं दानमीदृशम् ॥
न्यायेनाऽऽक्रम्य यल्लब्धं रिपुं निर्जित्य पार्थिवैः ।
तच्छुद्धं तत्प्रदेयं च नाऽन्यथोपहृतं क्वचित्[3] ॥

राजधर्मेषु विष्णुः[4]

परदत्तां च भुवं नाऽपहरेत् ब्राह्मणेभ्यः । [ सर्वदायान् प्रयच्छेत् ] ।

1 VII, 82–84
2 Kane, 22–23
3 Kane reads तान्नान्यथोपहृतं क्वचित्
4 3, 83–84 ; words in brackets are omitted by कल्पतरु

राजधर्मेषु आपस्तम्बः[1]

भृत्यानामनुरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्तांल्लोकान् जयति।

कात्यायनः[2]

वेदध्वनिप्रभावेण देवाः स्वर्गनिवासिनः।
तेऽपि तत्र प्रमोदन्ते तृप्तास्तु द्विजपूजनात्॥
तस्माद्यत्नेन कर्तव्या द्विजपूजा सदा नृपैः।
तेन भूयोऽपि शक्रत्वं नरेन्द्रत्वं पुनः पुनः॥

राजेत्यनुवृत्तौ शङ्खलिखितौ[3]

दद्याद्दानमर्चयित्वा ब्राह्मणाय निमित्तपूर्वं शेषेभ्यः, कृपणातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्बिभृयात्।

1 2, 26, 1; the printed text reads अभिजयति for जयति; वी. मि., p. 139 adds the comment: 'भृत्यानां' राजरक्षणापयुक्तानां अमात्यानुजीविप्रभृतीनाम्। 'अनुरोधेन' तद्भृत्यपीडनेन। 'यथार्हं' वृत्तशीलविद्याकुटुम्बादिकं विचार्य।

2 Kane, 6–7; वी. मि., p. 139, adds the comment: सत्कर्मणा शक्रत्वं प्राप्य पुण्यक्षये पुनः नरेन्द्रत्वं प्राप्नुयादिति शेषः। अत एवोक्तम्—

सुराध्यक्षः च्युतः स्वर्गात् नृपरूपेण तिष्ठति।
कर्तव्यं तेन तन्नित्यं येन तत्वं समाप्नुयात्॥

3 वी. मि., p. 138 adds to this citation the explanation: 'शेषेभ्यः' क्षत्रियादिभ्यः। 'निमित्तपूर्वं' सेवाद्युपाधिना।

वसिष्ठः[1]

राजनि च दद्यात्प्रेते प्रासङ्गिकम्। अनेन मातापितृवृत्तिर्व्याख्याता। राजमहिषीपितृव्यमातुलान् राजा बिभृयात्। तद्बन्धूश्चाऽन्याश्च राजपत्न्यो ग्रासाच्छादनार्थं लभेरन् अनिच्छन्त्यो वा व्रजेयुः। क्लीबोन्मत्तान् राजा बिभृयात् तद्गामित्वाद्रिक्थस्य।

'प्रासङ्गिकं' श्राद्धप्रसङ्गेन ब्राह्मणपूजनम्।

मनुः[2]

श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिञ्चनम्।

1 XIX, 29 ff. Fuehrer's ed. reads प्रव्रजेरन् for व्रजेयुः वी. मि., p. 139 adds अस्यार्थः—'राजनि प्रेते' मृते यः पुत्रातिरिक्तोऽपि राजा भवति, स 'प्रासङ्गिकं' मरणप्रसङ्गेनाऽऽवश्यकं तच्छ्राद्धादि कुर्यादित्यर्थः। यस्तु पितृमरणोत्तरं राजा भवति तं प्रति श्राद्धादिविधानस्याऽऽनर्थक्यप्रसङ्गात् सामान्यत एव प्राप्तेः। 'अनेन' तच्छ्राद्धादिविधानेन। 'मातापितृवृत्तिः' मृतराज्ञो मातापित्रोः भरणादिरूपा। 'व्याख्याता' अवश्यं कर्तव्या। 'अन्याश्च राजपत्न्यः' तदवरोधवासिन्योऽविवाहिता अपि, एता ग्रासाच्छादनं लभेरन्। अनेन पूर्वोक्तानां भरणविधानं पूर्वराजकृततद्वृत्त्यनुच्छेदपरम्। तत्राऽपि मातापित्रोः यावती पूर्वराजकृता वृत्तिः सा सर्वाऽपि दातव्या। राजमहिषीपितृव्यमातुलानां तु भरणं मानपुरस्सरम्। अवश्यं तद्भरणीयजनपोषणं यथा भवति तथा विधेयम्। तदवरोधवासिनीनां अन्यासां विवाहितानां अविवाहितानां च ग्रासाच्छादनमात्रं दद्यात्, पृथक् पृथङ्निर्दिशेत्। अत एव सर्वशेषे 'तद्गामित्वात् रिक्थस्य' इति हेतूपन्यासः। 'रिक्थस्य' तत्तद्दायस्य। 'तद्गामित्वात्' नूतनराजगामित्वात्। 'क्लीबोन्मत्तान्' पूर्वराजान्तःपुरात् अवधिकृतान्, पूर्वराजेनाऽवश्यभृतान्।

2 VII, 395; वी. मि., p. 140

महाकुलीनमार्यं च राजा सम्पूजयेत्सदा ॥

गौतमः[1]

बिभृयाद्ब्राह्मणवच्छ्रोत्रियान् । निरुत्साहांश्चाऽब्राह्मणान् । अकरांश्चोपकुर्वाणांश्च ।

आपस्तम्बः[2]

आवसथे श्रोत्रिया[ वराध्यां ]नतिथीन् वासयेत् ।

1 10, 9–11 ; मस्करिभाष्य., pp. 159–160 : 'ब्राह्मणान्' ब्रह्मगुणसम्पन्नान् , 'श्रोत्रियान्' श्रुतिमतः । भरणमन्नादिदानेन । 'निरुत्साहत्वं' उपजीवनार्थकर्मानुष्ठानासमर्थत्वम् । 'अब्राह्मणाः' क्षत्रियादयः । 'च' शब्दात् दीनानाथांश्च । वी. मि., p. 140 explains thus : 'अकरान्' येभ्यः करो न गृह्यते किन्तु मासि मासि एकैकदिनं कर्म कार्यते तादृशान् शिल्प्यादीन् । 'उपकुर्वाणांश्च' अधीयाना ब्रह्मचारिण उपकुर्वाणाः । तांश्च बिभृयादन्नादिदानेन । यद्यर्थिनः स्वयं जीवनवतश्च करादिव्यावर्तनेन । 'उपकुर्वाणा' लोकोपकारिणः वैद्यादय इति हरदत्तः ।

2 2, 25, 8–10 ; Words in brackets [ ] not in the Manuscripts , but found in the printed sūtra. हरदत्त explains thus : आवसथाख्ये स्थाने अतिथीन् वासयेत् । ते विशेष्यन्ते–'श्रोत्रियावराध्यान्' इति । अवरपर्यायो 'अवराध्य' शब्दः । यदि सर्वान् वासयितुं न शक्नोति श्रोत्रियानपि तावद्वासयेदिति । 'तेषां' अतिथीनां 'यथागुणं' विद्यावृत्तानुगुणं आवसथादि 'विदेयं' विशेषेण देयम् । 'आवसथा' अपवरकादयः । 'शय्या' खट्वादयः । 'अन्न'मोदनादि । 'पानं' तक्रसूपादि । 'गुरवः' पित्रादयः । 'अमात्याः' मन्त्रिणः । तान् 'नाऽतिजीवेत्' भक्ष्यभोज्याच्छादनादिषु तान्नाऽतिशयीत ।

वी. मि., p. 140, has the comment : 'देयं' राज्ञेति शेषः ।

तेषां यथागुणमावसथाः शय्याऽन्नपानं च [ वि ] देयं गुरूनमात्यांश्च नाऽतिजीवेत् ।

शङ्खलिखितौ

राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयाताम् । तावुभौ शक्तितः संविभक्तावुपकुर्यातां स्वधर्मानुष्ठानेन शिल्पिनः कारवश्च शूद्राः[1] ।

मनुः[2]

यस्य राज्ञस्तु विषये ब्राह्मणः सीदति क्षुधा ।
तस्याऽपि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥
श्रुतवृत्ते विदित्वाऽस्य वृत्तिधर्मं प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥
संरक्ष्यमाणो राज्ञाऽयं कुरुते धर्ममन्वहम् ।
तेनाऽऽयुर्वर्धते राज्ञो द्रविणं राष्ट्रमेव च ॥

'नातिजीवेत् अतिक्रम्य न जीवेत् । गुरूणाममात्यानां च जीविकां कृत्वैव स्वजीविकां कुर्यादित्यर्थः ।

1 वी. मि., p. 141

2 VII, 134–136 and वी. मि., p. 141 ; but वी. मि., p. 127 cites also the following as from विष्णुधर्मोत्तर ।

न च क्षुधाऽवसीदेत् श्रोत्रियो विषये वसन् ।
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ।
श्रुतिवृत्ते तु विज्ञाय वृत्तिं यस्य प्रकल्पयेत् ॥
रक्षेत सर्वतस्त्वेतान् पिता पुत्रमिवौरसम् ।
संरक्ष्यमाणो राज्ञा यः कुरुते धर्ममन्वहम् ।
तेनाऽऽयुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥

यमः[1]

पूर्वरात्रान्तरात्रेषु द्विजा यस्य ह्यधीयते ।
स राजा सह राष्ट्रेण वर्द्धते ब्रह्मतेजसा ॥

राजा यत्कुरुते पापं प्रमादात्सहते न वा ।
वसन्तो ब्राह्मणा राष्ट्रे जप्येन शमयन्ति तत् ॥

ब्राह्मणान् पूजयेन्नित्यं प्रातरुत्थाय भूपतिः[2] ।
ब्राह्मणानां प्रसादेन वसन्ति दिवि देवताः ॥

यदनुव्याहरन्त्येते[3] शुभं वा यदि वाऽशुभम् ।
तत्तथा नाऽन्यथा कुर्याद्ब्राह्मणो ह्यत्र कारणम् ॥

तथा

अभेद्यमच्छेद्यमनादिमक्षयं
निधिं पुराणं परिपालयन्ति ये ।
महीपतिस्तानभिपूज्य वै द्विजान्
भवेदजेयो दिवि देवराडिव[4] ॥

शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ।
अपि वज्रसहस्रेण ब्राह्मणाशीः सुदुर्भिदा ॥

1 वी. मि., p. 143

2 A. S. B. and I. O., भूमिपः

3 वी. मि., यदरुच्या

4 वी. मि., p. 142 adds the comment : 'पुराणं निधिं' वेदरूपम्

मनुः[1]

नाऽब्रह्म क्षत्रमृध्नोति नाऽक्षत्रं ब्रह्म वर्धते ।
ब्रह्मक्षत्रेण संयुक्तमिह चाऽमुत्र वर्द्धते ॥

यमः[2]

राजा वृक्षो ब्राह्मणस्तस्य मूलं
पौराः पर्णं मन्त्रिणस्तस्य शाखाः ।
तस्माद्राज्ञा ब्राह्मणा रक्षणीया
मूले गुप्ते नाऽस्ति वृक्षस्य नाशः ॥

आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मणः ।
प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति ॥

ब्राह्मणानां च शापेन सर्वभक्षो हुताशनः ।
समुद्रश्चाऽप्यपेयश्च विफलस्तु पुरन्दरः ॥

चन्द्रमा राजयक्ष्मा च पृथिव्यामूषराणि च ।
वनस्पतीनां निर्यासो दानवानां पराजयः ॥

अनन्तान्येव तेजांसि ब्राह्मणानां महात्मनाम् ।
तस्माद्विप्रेषु नृपतिः प्रणमेन्नियमेन च ॥

'विफलो' वृषणरहितः[3] ।

1 IX, 322 ; Printed texts read : ब्रह्मक्षत्रं च सम्पृक्तमिह चामुत्र वर्धते

2 वी. मि., p. 143

3 Comment reproduced by वी. मि., p. 143

मनुः[1]

परामप्यापदं प्राप्तो ब्राह्मणं न प्रकोपयेत् ।
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥
यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः ।
क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥
लोकानलोकान्[2] कुर्युस्ते लोकपालांश्च कोपिताः ।
देवान् कुर्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात् ॥
यानुपाश्रित्य तिष्ठन्ति देवा लोकाश्च सर्वदा ।
ब्रह्मैव च धनं[3] येषां को हिंस्यात्तान् जिजीविषुः ॥
प्रणीतश्चाऽप्रणीतश्च यथाऽग्निर्दैवतं महत् ।
अविद्वांश्च विद्वांश्चैव ब्राह्मणो दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाऽभिपूज्यते[4] ॥
एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्या दैवतं परमं हि तत् ॥
क्षत्रस्याऽपि प्रवृद्धस्य ब्राह्मणान् प्रति सर्वतः ।

1 IX, 313–321 ; वी. मि., pp. 151–2. Kullūka reads: ब्राह्मणान्न प्रकोपयेत् । वी. मि., p. 151 comments thus : 'परामपि' कोशक्षयेण बलवद्राजविरोधेन चोत्कृष्टाम्, आपदं प्राप्तो राजा ब्राह्मणं न कोपयेत् । तदीयधनादानेन तदवगणनया वा तन्मन्युं नोत्पादयेत् ।

2 Kullūka reads : लोकानन्यान् सृजेयुः

3 *Ibid.*, ब्रह्म चैव धनं

4 *Ibid.*, अभिवर्धते

ब्रह्मैव सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ॥
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति[1] ॥

महाभारते

अष्टौ पूर्वनिमित्तानि नरस्य विरामिष्यतः ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणांश्च विरुध्यते ॥
ब्राह्मणस्वानि चाऽऽदत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाऽभिनन्दति ॥
नैतान् स्मरति कृत्येषु याचितश्चाऽभ्यसूयति ।
एतान् दोषान्नरः प्राज्ञो बुध्या बुध्वा विवर्जयेत् ॥

तथा

भीष्म उवाच

एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानामनुज्ञानमत्यन्तं[2] सुखमिच्छतः ॥
कर्तव्यं पार्थिवेनेह तद्विद्धि भरतर्षभ ।
श्रोत्रियान् स्नातकान् वृद्धान् नित्यमेवाऽभिपूजयेत् ॥
पौरजानपदांश्चाऽपि ब्राह्मणांश्च बहुश्रुतान् ।

1 वी. मि., p. 152 comments thus: सर्वोऽयं अर्थवादः । अपराधिनोऽपि ब्राह्मणस्य दण्डनिवृत्यर्थं स्तुतिरियम् । Kullūka modifies this position: दण्डकरणे चेयं ब्राह्मणस्तुतिः ब्राह्मणानां अपराधिनामपि लघुदण्डप्रयोगनियमार्था ।

2 I. O. and A. S. B; Udaipur Ms. has अन्यं ते

सान्त्वेन भोगदानेन नमस्कारैस्तथेज्यया ॥
एतत्कृत्यतमं राज्ञां नित्यमेवाऽभिलक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस्तथैतान् परिपालयेत् ॥
ये चाऽप्येषां पूज्यतमास्तान्नृपः प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥

राजेत्यनुवृत्तौ ब्रह्मपुराणे

नित्यं सन्निहितान् देवान् मुनीन्नागांश्च पूजयेत् ।
पिशाचेभ्यो बलिं दद्यात्सन्ध्याकाले च नित्यशः ॥

भविष्यपुराणे

राज्ञां पूज्यः सदा प्रोक्तः कार्त्तिकेयो महीपते ।
कार्त्तिकेयादृते राज्ञां नाऽन्यं पूज्यं प्रचक्षते ॥
सङ्ग्रामे गच्छमानो यः पूजयेत्कृत्तिकासुतम् ।
स शत्रून् जयते वीरो यथेन्द्रो दानवान् रणे ॥
तस्मात्सर्वप्रयत्नेन पूजयेच्छङ्करात्मजम् ।
पूज्यमानस्तु तं भक्त्या चम्पकैर्विविधैर्नृप ॥
मुच्यते सर्वपापेभ्यः स वै गच्छेच्छिवालयम् ॥

देवीपुराणे

नामभेदेन सा भिन्ना अभिन्ना परमार्थतः ।
शिवा नारायणी गौरी चर्चिका विमला उमा ॥
सा वन्द्या पूजनीया च सततं तत्प्रभावितैः ।
विजयार्थं नृपैः खड्गे छुरिका पादुके पटे ॥

चामुण्डां चित्ररूपां च लिखतां चाऽथ पुस्तके ।
ध्वजे वा कारयेच्छत्रं स नृपो विजयेद्रिपून्[1] ॥

इति राजकृत्यम् ॥

1 I. O. omits these two ślokas.

१५

# अथ देवयात्राविधिः

तत्र ब्रह्मपुराणे[1]

वैशाखादिषु मासेषु षट्सु देवगृहेषु च ।
यात्रोत्सवः सदा कार्यः प्रतिसंवत्सरेष्वपि ॥
कार्या च ब्रह्मणे यात्रा प्रतिपद्यपि सर्वदा ।
द्वितीयायां च देवेभ्यो विद्यारम्भे महोत्सवे ॥
भागीरथ्यै तृतीयायां कर्तव्या च सुशोभना ।
विनायकाय नागेभ्यश्चतुर्थ्यामथ कारयेत् ॥

'चतुर्थ्यामथे'त्यथशब्देन पञ्चम्युपादीयते ।

स्कन्दाय षष्ठ्यां सप्तम्यां सूर्येभ्यश्च यथाक्रमम् ।
पुरन्दराय चाऽष्टम्यां रुद्राय सगणाय च ॥
दुर्गाद्याभ्यश्च मातृभ्यो नवम्यामथ सर्वदा ।
भूम्यै दशम्यां कर्त्तव्या सर्वोपकरणान्विता ॥
एकादश्यां समासेन विधात्रे विश्वकर्मणे ।
द्वादश्यां विष्णवे कार्या सायुधाय महात्मने ॥
त्रयोदश्यां तु कामाय चतुर्दश्यां कपर्दिने ।
पौर्णमास्यां तु देवेभ्यस्तथा चन्द्रमसे तथा ॥

1 वी. मि., p. 416

अमावास्यायां पर्वान्ते पितृभ्यश्चाऽत्र कुत्रचित् ।
चतुर्दश्यां चतुर्थ्यां वा पितृराजे[1] यमे तथा ॥
द्वादश्यां पौर्णमास्यां वा नागेभ्यः पञ्चमेऽहनि ।
नारायणाय सर्वासु कार्या तिथिषु सर्वदा ॥
यात्रां च कर्त्तुकामेन प्रारम्भे तु दिने दिने ।
विनायकाय पूजा च कर्तव्या मोदकोत्करैः ॥
द्वितीयेऽहनि कर्तव्या ग्रहशान्तिर्यथाक्रमम् ।
गन्धर्वेभ्यस्तथा पूजा चतुर्थेऽहनि शास्त्रवित् ॥
पञ्चमे स्थाननागाय पयसा पायसेन च ।
षष्ठे देयं ब्राह्मणेभ्यो भोजनं च सदक्षिणम् ॥
स्नपनं सप्तमे कार्यं देशं कृत्वा सुरक्षितम् ।
सुधावदातं कर्तव्यं चित्रितं देवतागृहम् ॥
रङ्गस्थानं तु देवेभ्यो विहितं कारयेत्तथा ।
स्रग्वस्त्रमाल्यहेमाद्यैः प्रधानं देवमर्चयेत् ॥
ततोऽर्चास्नपनं कार्यं कल्पशाखाक्रमेण च ।
पुण्याहगीतनृत्याद्यैर्होमैर्बल्युपहारकैः ॥
ततोऽर्चास्नपनस्यान्ते [2]पौरैर्नृत्यपुरस्सरम् ।
आनेतव्यं च महता विभवेनोदकं शुभम् ॥
नित्यं सन्निहितात्तीर्थाद्यथा प्राप्तैर्घटैर्नवैः ।
देशकालानुसारेण गजाश्ववृषमानवैः ॥

1 All Mss. have पितृराज्ञे, which is corrected by वी. मि., p. 417 as पितृराजे

2 वी. मि., p. 417 reads वृद्धपुरस्सरैः

तेनोदकेन प्रतिमा स्नाप्या भूमौ च शास्त्रवत् ।
नदभूमिश्च[1] कर्तव्या सर्वदोषविवर्जिता ॥

प्राप्ते तु यात्रादिवसे कूटागारं तु कारयेत् ।
पुष्पैर्माल्यैस्तथा वस्त्रैः पताकाभिश्च शोभितम् ॥

घण्टासहस्रानिनदं सर्वशोभासमन्वितम् ।
आरोप्या प्रतिमा तत्र सुसूक्ष्मा च सुशोभना ॥

कूटागारं च वोढव्यं गजैरश्वैर्नरैर्वृषैः ।
देशकालानुसारेण वस्त्रमाल्याद्यलङ्कृतैः ॥

सबलेनाऽनुगन्तव्यो राजा देवस्य पृष्ठतः ।
सुदूरे चाऽनुगन्तव्यस्तत्प्रयुक्तैश्च मन्त्रिभिः ॥

यस्य यस्य समीपे तु स देवो याति पूजितः ।
तेनाऽऽतिथ्यं च कर्तव्यं तस्मै धूपादिभिः सदा ॥

क्ष्वेडितोत्कृष्टशब्दैश्च जयवाद्यस्वनेन च ।
यथागमं च कर्तव्यं नगरे च प्रदक्षिणम् ॥

ततो देवगृहं तां तु सम्पूज्य प्रतिमां नयेत् ।
महान्तमुत्सवं कुर्वन् गीतनृत्यसमाकुलम् ॥

तस्यां राज्ञा ततो देया दीपाः शतसहस्रशः ।
रङ्गभूमौ दिदृक्षूणां प्रकाशार्थं महात्मनः ॥

तैस्तैः सुभाषितैः श्लोकैर्हर्षयित्वा जनांस्तथा ।
सर्वेषामनुकम्पार्थं धर्मचक्रं प्रवर्तयेत् ॥

रङ्गोपजीविनां पश्येत् तृतीयेऽहनि कौशलम् ।
यथाशक्ति धनं तेभ्यो दद्याद्दम्भं च वर्जयेत् ॥

1 वी. मि., p. 417 , नटभूमिश्च

प्रेक्षाकाले प्रधानास्ते पूजितव्याः क्रमेण तु ।
सम्मानपूर्वं विधिवत्ताम्बूलकुसुमादिभिः ॥
यात्रावसाने भूतानि पूजनीयानि सर्वदा ।
पूजोपचारैर्बलिभिस्ततो नक्तञ्चरानपि ॥
अदृष्टविग्रहानेवं दिदृक्षूणां महोत्सवम् ।
सन्ध्यायां परया भक्त्या त्यक्त्वा सन्देहमात्मनः ॥
सर्वमस्तीति विज्ञाय चेतसा निर्मलेन च ।
एकान्तदेवताः पूज्या वैशाखे मासि पूर्ववत् ॥
गृहे गृहस्थैः सम्पूज्या स्त्रियश्च गृहदेवताः ।
आचारान् पालयेदेतान् यस्तु राजा समाहितः ॥
स पुत्रपौत्रसंयुक्तो दीर्घायुर्धनवान् भवेत् ।
सर्वत्र जयमाप्नोति याति स्वर्गं च शाश्वतम् ॥
यदेतद्वैष्णवं वाक्यं देशेऽस्मिल्लंघ्यते जनैः ।
तदा सस्यानि नश्यन्ति घोरैरुदकविप्लवैः ॥
अतिवृष्टिरनावृष्टिर्दुर्भिक्षं च तथा मृतिः ।
दम्भाभिमानलोभांस्तु तस्मात्त्यक्त्वा प्रयत्नतः ॥
यदुक्तं विष्णुना वाक्यं तत्कुर्यात्कृतनिश्चयः ॥

इति देवयात्राविधिः ॥

# अथ कौमुदीमहोत्सवः

तत्र स्कन्दपुराणे[1]

प्रातःप्रभृति राजा च आज्ञापयति कौमुदीम् ।
देवरात्रिं च देवस्य रुद्रस्याऽसुरनाशिनीम् ॥
सुसम्मृष्टोपलिप्ताभी रथ्याभिः क्रियतां पुरम् ।
वासोभिः संहृतैः सर्वे भवन्तु पुरवासिनः ॥
स्रग्विणश्च शिरःस्नाताः सदाम्पत्या यथाक्रमम् ।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्त्तकाः ॥
उच्छ्रियन्तां पताकाश्च गृहे वीथ्यापणेषु च ।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु वः ॥
पुष्पप्रकरजुष्टानि धूपैर्नानाविधैरपि ।
स्रग्दामवन्ति सर्वाणि वनमालाकुलानि च ॥
दीपा रात्रौ च सर्वत्र राजमार्गे गृहेषु च ।
अनन्तराः क्रियन्तां वै प्रचुरस्नेहवर्त्तयः ॥
[ तरुणाः सह योषिद्भिः समन्तात्पर्यटन्तु च[2] ।
रममाणा हसन्तश्च गायन्तो नृत्यसेविनः ॥
भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां दिव्ययोषितः ।

1 वी. मि., p. 419

2 These two ślokas are omitted by Udaipur Ms. only.

महादेवस्य पूजां च गन्धपुष्पादिकां शुभाम् ॥ ]
उपहारांश्च विविधान् शयनानि महान्ति च ।
दीपांश्च विविधाकारान् पानानि कृशरांस्तथा ॥
फलानि च विचित्राणि मांसपक्वं तथाऽऽमकम् ।
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ॥
वध्यन्तां पशवश्चाऽत्र भोज्यन्तां च द्विजोत्तमाः ।
यो न कुर्यादिदं सर्वं पुरवासी नरः क्वचित् ॥
पातयेत्तस्य शारीरं दण्डं राजा महायशाः ।
राजाऽपि संयतः शान्तः शुचिः प्रयतमानसः ॥
दिवसे दिवसे रुद्रं स्नापयीत प्रयत्नवान् ।
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ॥
क्षीरेण सर्पिषा दध्ना रसैश्च बहुभिः शुभैः ।
पुष्पैः फलैश्च बीजैश्च रत्नैश्चाऽद्भिस्समन्वितैः ॥
भस्मना गन्धयुक्तेन उदकेन सुगन्धिना ।
एकैकशः स्वयं राजा घटानां दशभिः शतैः ॥
दिवसे दिवसे व्यास त्र्यम्बकं सोऽभिषेचयेत् ।
गन्धैः पुष्पैश्च धूपैश्च जाप्यैर्बलिभिरेव च ॥
पूजयित्वा ततो राजा विप्रानन्यांश्च भोजयेत् ।
स कृत्वा पशुभिर्मेध्यैर्वस्त्रैर्मणिभिरेव च ॥
बलिवस्त्रान्नदानैश्च स्तूयमानो गृहान् व्रजेत् ॥

इति कौमुदीमहोत्सवः ॥

# अथेन्द्रध्वजोच्छ्रायविधिः

तत्र देवीपुराणे[1]

शुभे ऋक्षे च करणे मुहूर्त्ते शुभमङ्गले ।
दैवज्ञः सूत्रधारश्च वनं गच्छेत्सहायवान् ॥
देवीप्रतिष्ठाविधिना यात्रायां यः प्रचोदितः ।
गत्वाऽन्विष्य शुभं वृक्षं प्रियङ्गुधवमर्ज्जुनम् ॥
उदुम्बं [2]गजकर्णं च पञ्चैतान् शोभनान् हरेत् ।
ध्वजार्थं वर्ज्जयेद्वत्स देवतोद्यानजान् द्रुमान् ॥
कन्यामध्योत्तमा[3] यष्टीः करमानेन कल्पयेत् ।
एकादशकरा वत्स नवपञ्चकराऽपरा ॥
अनिबद्धां कृमिचितां तथा पक्षिनिकेतनाम् ।
वल्मीकपित्र्यवनजां[4] सशुष्कां च सकोटराम् ॥
कुब्जां च घटसंसिक्तां तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहताश्चैव दग्धां च परिवर्ज्जयेत् ॥
अलाभे चम्पकं[5] चाऽऽम्रं शालशाकमयं तथा ।

1 वी. मि., p. 421

2 वी. मि., p. 42 reads अजकर्कं ; वी. मि., p. 411 : 'उदुम्बं' उदुम्बरम्

3 'कन्या' कनीयसी इति वी. मि.

4 'पित्र्यवनजां श्मशानोत्पन्नाम् इति वी. मि.

5 A. S. B., I. O. and वी. मि., p. 421, read चन्दनं

कर्तव्यं शक्रचिह्नार्थं न चाऽन्यद्वृक्षजं क्वचित् ॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
ततः सम्पूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ॥
"नमो वृक्षपते वृक्ष त्वामर्चयति पार्थिवः ।
ध्वजार्थं तत्वतो नाऽत्र अन्यथा उपगम्यताम्" ॥
रात्रौ देयो बलिः श्वभ्रे दिक्षु वृक्षे तथैव च ।
वासं वने महावृक्ष कृत्वा ह्यन्यत्र गम्यताम्[1] ॥
ध्वजार्थे देवराजस्य रक्षन्ति तव चाऽत्र च ।
पूजयित्वा ततो वृक्षं बलिं सौमं तु दापयेत् ॥
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः ।
उदङ्मुखः प्राङ्मुखो वा मध्वक्तेनाऽथ पर्शुना ॥
पूर्वोत्तरं पतन् शस्तो निःशब्दो निर्व्रणः शुभः ।
अलग्नः पादपेऽन्यस्मिन् अन्यथा तु परित्यजेत् ॥
अष्टाङ्गुलं त्यजेन्मूलमग्रं तत्र जले क्षिपेत् ।
तथा तं चाऽऽनयेद्धृत्स शकटेन वृषैरथ ॥
युवभिर्बलसम्पन्नैः प्रयत्नात्पुरतः पुरम् ।
नीयमाना यदा यष्टिः समा वा चतुरस्त्रिका ॥
वृत्ता वा भङ्गमादत्ते राजपुत्रपुरोहितौ ।
आराभङ्गे बलं भिन्द्यान्नेम्या भङ्गे क्षयस्तथा ॥
रथस्य त्वक्षभङ्गे तु शान्तिः तत्र तु कारयेत् ।
"इन्द्रं यच्छे"ति मन्त्रेण जातवेदो मयेन वा ॥

1 Omitted in Udaipur Ms. and present in I. O., A. S. B. and वी. मि., p. 421

तथा नीत्वा शुभे लग्ने पुरे तामुपवेशयेत् ।
द्वारे शोभां पुरे रथ्या गृहेष्वपि च कारयेत् ॥
पटुभिः पटहानादैः वेश्यासङ्गस्य मङ्गलैः ।
द्विजानां वेदशब्दैश्च तां नयेद्यत्र चोच्छ्रयेत् ॥
[ तत्रस्थां चित्रकर्मारनिर्मितैस्तां तु वेष्टयेत्[1] ।
वस्त्रैः तदैव कृत्तोतैः[2] शुभैः सूक्ष्मैर्यथाक्रमम् ॥
नन्दोपनन्दसंज्ञाश्च कुमार्यः प्रथमांशके । ]
देव्यो जयाविजयाख्याः षोडशांशैः व्यवस्थिताः ॥
[ अम्बिकां शत्रुजयित्रीं[3] ] नत्वाऽथ ध्वजदैवतम् ।
ध्वजस्य परिमाणे ताः सम्पाद्यैव विनिर्दिशेत् ॥
षोडशांशविहीनानि कुर्याच्छेषाणि बुद्धिमान् ।
वाससां[4] चित्रवर्णानां स्वयम्भूः प्रथमामदात् ॥
सुभक्तां चतुरस्रां च विश्वकर्मा द्वितीयकम् ।
अष्टास्रिं च स्वयं शक्रो नीलरक्तामदात्पुरा ॥
कृष्णं यमेन दत्तं च वरुणेन महांशुकम् ।

1 I. O. omits three lines here.

2 'वासः सद्यःकृत्तोतम्' ( आपस्तम्बगृह्यसूत्र., 10, 10 ). Haradatta explains it thus : "एकस्मिन्नेव अहनि तन्तु-क्रिया वयनक्रिया च यस्य तत् सद्यःकृत्तोतम्" ।

3 Mss. have अविकोशातुजनितैः, which is meaningless; and the next line is also corrupt. 'शत्रुजरित्रीं' इति वी. मि., p. 423

4 So वी. मि., p. 423 ; Mss. read रसानां, which does not fit in.

मञ्जिष्ठं जलजाकारं वायुर्देवाय सूकरम्[1] ॥
नीलवर्णं च तत्प्रादाच्छन्दोवाह्निविचित्रितम्[2] ।
वृत्तन्तु दहनः प्रादात्स्ववर्णं तच्च अष्टमम् ॥
वैडूर्यसदृशं चेन्द्रो ग्रैवेयं पुनरप्यदात् ।
चक्राङ्काकृतिवत् सूर्यो विश्वेदेवास्तु पद्मकम् ॥
नीलं नीलोत्पलाभासमृषयोऽपि च तं ददुः ।
शुक्रेण गुरुणा न्यस्तं विशालं[3] तच्च मूर्द्धनि ॥
गृह्यैरपि विचित्राणि तानि दत्तानि मातृभिः ।
यद्यद्येनैव दत्तं तु केतोस्तत्तस्य भूषणम् ॥
तद्दैवं तद्विजानीयात् यन्त्रादिभिरथोच्छ्रयेत् ।
कर्षन्ती प्रवरां भूमिं यष्टी [4]राष्ट्रं निहन्ति च ॥
बालानां तलशब्देन देशघातं विनिर्दिशेत् ।
नृपघातकरी कीर्णा[5] सर्वशान्ता शुभावहा ॥
शम्भुसूर्ययमेन्द्रेन्द्रधनदानां च वारुणैः ।
वह्नेर्नागस्य मन्त्रैश्च होतव्या दधि चाऽक्षताः ॥
शुक्रं स्कन्दं गुरुं रुद्रमप्सरोभिः प्रपाठयेत् ।
हुत्वा च विधिवद्वह्निज्वालां लक्षेच बुद्धिमान् ॥

1 वी. मि., p. 423, षट्कम् for सूकरम् and देवोऽपि for देवाय

2 I. O. omits eight ślokas from this. वी. मि., p. 423, स्कन्दो बहुविचित्रितम्

3 Line corrupt : न्यष्टविलासं for न्यस्तं विशालं ; corrected from वी. मि., p. 423

4 Mss. have रात्री for राष्ट्रम् in वी. मि.

5 वी. मि., p. 433 reads शीर्णे for कीर्णा

सुतेजस्सुमनोदीप्ता महती रविसप्रभा ।
रक्ताऽशोकसमाकारा रथभेरीस्वना शुभा ॥
शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ।
कदलीष्विक्षुदण्डेषु पताकाश्च समुच्छ्रयेत् ॥
अन्याश्च विविधाः शोभाः शक्रकेतौ समुच्छ्रयेत् ।
प्रौष्ठपद्यामथाऽष्टम्यां शुक्लायां शोभने च ते[1] ॥
आश्विने चाऽथ शुक्लायां श्रवणे वाऽथ उच्छ्रयेत् ।
घोषैश्च नटवृन्दैश्च पटभेरीनिनादितम् ॥
वितानध्वजशोभाढ्यपताकाभिः समुज्ज्वलम् ।
विष्णवीशशक्रमन्त्रेण सिंहरक्षःकृतेन च[2] ॥
दृढमातृकरन्ध्रस्थं शुभतोरणमार्गणम् ।
अवलम्बितमुत्तानमभग्नपिटकं समम् ॥
न द्रुतं च समुत्थाप्यः केतुर्वासवजो विभो ।
उच्छ्रितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ॥
न तत्र [3]लयनं दद्यादन्येषामपि पक्षिणाम् ।
मन्त्रेण[4] चोच्छ्रयं कुर्यादिन्द्रकेतोर्यथाविधि ॥

1 वी. मि., p. 424 , दिने for च ते

2 'विष्णवीशशक्रमन्त्रेण' इत्यनेन "इदं विष्णुर्विचक्रमे" ( ऋ. सं., I, 2, 7 ), "तमीशानं जगतस्तस्थुषस्पतिम्" ( ऋ. सं, I, 6, 15 ) "इन्द्रं वा विश्वतस्परि" ( I, 1, 14 ) इति मन्त्रत्रयं निर्दिष्टम् ।

3 वी. मि., p. 424 reads लङ्घनं for लयनम् । लयनमावासस्थानम् । लङ्घनमतिक्रम्य गमनम् ।

4 *Ibid.*, यन्त्रेण for मन्त्रेण

यथा सुसंस्कृतं पूज्य सुखयन्त्रं सुयन्त्रितम् ।
रात्रौ जागरणं कुर्यादिन्द्रमन्त्रानुकीर्तनैः[1] ॥
पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ।
केतुपातो नृपं हन्यात्पताका महिषीवधम् ॥
पीटको युवराजस्य सदैवमनुकल्पयेत् ।
राष्ट्रं तोरणपातेन ध्वज अन्नक्षयो भवेत् ॥
पतिते शक्रदण्डे च नृपमन्यं समादिशेत् ।
कृमिजालसमुत्थाने शलभात्तस्कराद्भयम् ॥
सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ।
तिष्ठत्येवोत्थितो यावत्तावद्युगसमाः समाः ॥
निरता यजने केतो रञ्जीरन्निन्द्रकन्यकाः ।
पतिते तु तथा कार्या पूजोत्थाने तु यादृशी ॥
रात्रौ शुभं कृत्यतमं नाऽदृष्टं काकपोतकैः ।
नृपतिः सह राष्ट्रीयैर्यश्चैवं कारयेत्क्रतुम् ॥
नगरे वा पुरे खेटे यद्येवं कुरुते नृपः ।
पौरन्दरं नगरद्वारे वृषसिंहसमुच्छ्रितम् ॥
केतुं समस्तघोराणां नाशनं जयदं मतम् ।
एवं पूर्वं हरिः केतुं प्राप्तवान् वृषवाहनात् ॥
ततो ब्रह्माऽथ तेनैव ब्रह्मणः शक्रमागतः ।
तेन सोमस्य तद्दत्तं ततो दक्षं समागतः ॥
तदाप्रभृति कुर्वन्ति नृपा अद्याऽपि चोच्छ्रयम् ।

1 ऋग्वेदोक्ता बहव इन्द्रप्रकाशका मन्त्रा अत्र अभिप्रेताः ।

एवं यः कारयेद्राजा केतुं विजयकारकम् ॥
तस्य पृथ्वी घनोपेता सद्वीपा वशगा भवेत् ॥

इतीन्द्रध्वजोच्छ्रायविधिः[1] ॥

1 वी. मि., pp. 415–438 cites additional passages from विष्णुधर्मोत्तर on the subject.

१८

# अथ महानवमीपूजा

## अथ आश्विनशुक्लनवम्यां देवीपूजा

तत्र देवीपुराणे[1]

ब्रह्मोवाच

हते घोरे महावीरे सुरासुरभयङ्करे।
देव्या उपासका देवाः प्रभूता राक्षसास्तथा॥
आगता घातितं दृष्ट्वा महिषं तं सुदुर्जयम्।
ब्रह्मविष्णुमहेशाना इन्द्रचन्द्रयमानिलाः॥
आदित्या वसवो रुद्रा ग्रहा नागाः सगुह्यकाः।
समेत्य सर्वे देवास्ते देवीं भक्त्याऽथ तुष्टुवुः॥
वरं च सर्वलोकानां प्रददौ भयनाशिनी।
बलिं ददुश्च भूतानां महिषाजामिषेण तु॥
पुरेषु शङ्खभेर्यश्च शतशोऽथ सहस्रशः।
कृता दुन्दुभिनादाश्च पटुशब्दाः समर्दलाः॥
पताकाध्वजयन्त्रादि घण्टाचामरशोभितम्।
तद्दिनं कारयेच्छक्र देवीभक्तः सुरोत्तम॥
एवं तस्मिन् दिने वत्स भूतप्रेतसमाकुले।
कृताऽथ सर्वदेवैश्च महापूजाऽथ शाश्वती॥

1 वी. मि., p. 439. ff.

आश्विने मासि मेघान्ते महिषारिनिबर्हिणीम् ।
देवीं सम्पूजयित्वा ये अर्धरात्रेऽष्टमीमुखे ॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।
बलिं च ये प्रयच्छन्ति सर्वभूतविनाशकम् ॥
तेषां तु तुष्यते देवी यावत्कल्पं तु शाङ्करम् ।
क्रीडन्ति विविधैर्भोगैर्देवलोके सुदुर्लभे ॥
नाऽऽधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ।
न च देवग्रहा दैत्या न सुरा न च पन्नगाः ॥
पीडयन्ति सुराध्यक्ष देवीपादसमाश्रितान् ।
यावद्भूर्वायुराकाशं जलं वह्निः शशी ग्रहाः ॥
तावच्च चण्डिका पूज्या भविष्यन्ति सदा भुवि ।
प्रावृट्काले विशेषेण आश्विने चाऽष्टमीषु च ॥
महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति ।
एतत्ते देवराजेन्द्र स्वर्गवासफलप्रदम् ॥
परापरविभागं तु क्रियायोगेन कीर्तितम् ॥

इन्द्र उवाच

आश्विनस्य सिते पक्षे नवम्यां प्रतिवत्सरम् ।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥

ब्रह्मोवाच

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्वशत्रुनिबर्हणम् ॥
सर्वलोकोपकारार्थं विशेषात्पथिवृत्तिषु ।
कर्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः ॥

गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥

महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥

कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाचिताश्युपवासी नक्ताशी त्वथ वाग्वदः ॥

प्रातस्स्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तः कन्यकां भोजयेत्सदा ॥

अष्टम्यां नवगेहानि दारुजानि शुभानि च ।
एकं वा वित्तभावेन कारयेत्सुरसत्तम ॥

तस्मिन् देवी प्रकर्तव्या हैमी वा राजताऽपि वा ।
वृक्षाद्वा लक्षणोपेता[1] खड्गे शूलेऽथ पूजयेत् ॥

सर्वोपहारसम्पन्ना वस्त्ररत्नफलादिभिः ।
कारयेद्रथदोलादि बलिपूजां च दैविकीम् ॥

पुष्पादिद्रोणबिल्वादिजातीपुन्नागचम्पकैः ।
विचित्रां रचयेत्पूजामष्टम्यां समुपासयेत् ॥

दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः सुभावितः ।
तदर्द्धयामिनीशेषे विजयार्थं नृपः पशुम्[2] ॥

पञ्चाब्दं लक्षणोपेतं गन्धधूपसुगन्धितम् ।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत् ॥

1 वी. मि., p. 441 , मूर्धाक्षिलक्षणोपेता

2 वी. मि., p. 441 ; Mss. read नृपोत्तम but an object for घातयेत् lower down is needed.

तदुत्थं रुधिरं मांसं गृहीत्वा पूजनादिषु ।
नैर्ऋतेभ्यः प्रदातव्यं महाकौशिकमन्त्रितम् ॥

तस्याऽग्रतो नृपः स्नायाच्छत्रं कृत्वा तु पूजितम् ।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥

देवीं च स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः[1] ।
कुङ्कुमागुरुकर्पूरचन्दनैश्चाऽर्च्य धूपयेत् ॥

देयानि पुष्परत्नानि वासांसि त्वहतानि च ।
नैवेद्यं सुप्रभूतं तु देयं देव्याः सुभावितैः ॥

देवीभक्ताश्च पूज्यन्ते कन्यकाप्रमदादयः ।
द्विजान्दीनान्धपाषण्डान् अन्नपानेन तर्पयेत् ॥

नन्दाभक्ता नरा ये तु महाव्रतधराश्च ये ।
पूजयित्वा विशेषेण[2] तस्मात्तद्रूपमाविकम् ॥

मातॄणां चैव देवीनां पूजा कार्या सदा निशि ।
ध्वजच्छत्रपताकादि उच्छ्रयेदम्बिकागृहे ॥

रथयात्रा बलिक्षेमं स्फुटवाद्यरवाकुलम् ।
कारयेत्तुष्यते येन देवी पशुनिपातनैः ॥

अश्वमेधमवाप्नोति भक्तितः सुरसत्तम ।
महानवम्यां पूजेयं सर्वकामप्रदायिका ॥

1 Reconstructed. Line corrupt in वी. मि., p. 441, and all three Mss ; A. S. B. has ततो देवीं स्नपेत् for purposes of metre, but it is ungrammatical ; the others read ततो देवीं स्नापयेत् , which breaks the *chhandas*.

2 वी. मि., p. 441 reads : पूजयेत्तान् विशेषेण

सर्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्तिता ।
कृत्वाऽऽप्नोति यशोराज्यपुत्रायुर्धनसम्पदः ॥

इति महानवमीपूजा ॥

१९

# अथ चिह्नविधिः[1]

तत्र देवीपुराणे

ब्रह्मोवाच

क्षीराशी कार्तिकारम्भे देवीभक्तिरतो नरः ।
शाकयावकएकाशी प्रातस्नायी शिवानतः ॥
पूजयेत्तिलहोमं तु दधिक्षीरघृतादिभिः ।
कुर्याद्देव्यास्तु मन्त्रेण शृणु पुण्यफलं हरे ॥
महापातकसंयुक्तो युक्तो वाऽप्युपपातकैः ।
मुच्यते नाऽत्र सन्देहो यस्मात्सर्वगता शिवा ॥
अन्यो वा भावनायुक्तस्त्वनेन विधिना शिवाम् ।
स्वयं वा अन्यतो वाऽपि पूजयेत्पूजयीत[2] वा ॥
न तस्य भवति व्याधिर्न च शत्रुकृतं भयम् ।
नोत्पातग्रहदौस्थ्यं वा न च राष्ट्रं विनश्यति ॥
सदा स्वभावसम्पन्ना ऋतवः शुभदा घनाः ।
निष्पत्तिः सर्वसस्यानां तस्करा न भवन्ति च ॥
प्रभूतपयसो गावो ब्राह्मणाश्च क्रियापराः ।
स्त्रियः पतिव्रताः सर्वा नृपा निर्वृतिकारिणः ॥

1 वी. मि., p. 443 ff : चिह्नेषु देवीपूजाविधिः

2 Mss. read पूजयेत

फलपुष्पवती धात्री सस्यानि रसवन्ति च ।
भवेयुर्नाऽत्र सन्देहश्चर्चिकाविधिपूजनात् ॥
"जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा[1] धात्री स्वाहा स्वधा नमोऽस्तु वः" ॥
अनेनैव तु मन्त्रेण जपं होमं तु कारयेत् ।
प्रातस्तु संस्मृता वत्स महिषघ्नी सुपूजिता ॥
अघं नाशयते क्षिप्रं यथा सूर्योदये तमः ।
सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा ॥
द्वारस्था पूज्यते वत्स न तस्य रिपुजं भयम् ।
कपिसंस्था महामाया सर्वशत्रुविनाशिनी ॥
वृषे यथेप्सितं दद्यात्कलभे[2] श्रियमुत्तमम् ।
हंसे विद्यार्थकामं तु बर्हिणेऽभीष्टपुत्रदा ॥
गरुत्मति महामाया सर्वरोगविनाशिनी ।
महिषस्था महामारी शमयेत् ध्वजसंस्थिता ॥
करिगा सर्वकार्येषु नृपैः कार्या त्रिशूलिनी ।
पद्मस्था चर्चिका रौप्या धर्मकामार्थमोक्षदा ॥
प्रेतस्था सर्वभयदा नित्यं पशुनिपातनैः ।
पूजिता देवराजेन्द्र नीलोत्पलकरा वरा ॥
भवेत्तु सिद्धिकामस्य चिह्नाग्रे संव्यवस्थिता ।
गन्धपुष्पार्चितां कृत्वा वस्त्रहेमसुचर्चिताम् ॥

1 I. O., शिवा क्षमा

2 Mss. read कलशे, which does not fit in. वी. मि.. p. 443 reads : कलभे

फलशालियवैः शूकवर्द्धमानैर्विभूषिताम् ।
शोभनामुच्छ्रयेदग्रे पताकां वा मनोरमाम् ॥
चामरं कलशं शङ्खं सातपत्रं वितानकम् ।
भवेत्तु सिद्धिकामस्य नृपस्य फलदायकम् ॥
"नमो विश्वेश्वरि दुर्गे चामुण्डे मुण्डहारिणि[1] ।
ध्वजं समुच्छ्रयिष्यामि वसोर्धारासुखावहम्[2]" ॥

इति चिह्नविधिः ॥

1 I. O. and वी. मि., p. 443 : चण्डहारिणी

2 वी. मि., p. 444 , वसोर्धारां सुखावहाम्

# २०

# अथ गवोत्सर्गः

तत्र देवीपुराणे[1]

कृष्णपक्षे त्वमावास्या कार्तिकस्य ततः परे ।
योऽह्नि कुर्याद्गवोत्सर्गमश्वमेधफलं लभेत् ॥

सुवर्णदाने गोदाने भूमिदाने च यत्फलम् ।
तत्फलं कोटिगुणितं गवोत्सर्गेण लभ्यते ॥

तस्मान्मनोरमे स्थाने शाद्वले गर्त्तवर्जिते ।
शर्कराश्मरहिते शङ्खभेरीनिनादिते ॥

स्तम्भद्वयं समारोप्य पूर्वपश्चिमसंस्थितम् ।
तत्र दर्भमयी कार्या शरवंशभवाऽथवा ॥

मध्ये कम्बलसंयुक्ता दीर्घरज्जुः सुशोभना ।
उभयोः पार्श्वयोर्विप्राः वेदध्वानिसमान्विताः ॥

एवं विधानतः कृत्वा उत्सर्गं कारयेत्ततः ।
प्रथमं गच्छते होता यजमानसमन्वितः ॥

ब्रह्मक्षत्रविशः शूद्रास्तथा गावः प्रजाः पुनः ।
तथाऽन्ये वर्णबाह्यास्तु चण्डालपरिवर्जिताः ॥

गच्छन्ति मुदिता हृष्टा हास्यतोषसमन्विताः ।
यस्त्वेवं कुरुते राजा पुरे ग्रामेऽथ पत्तने ॥

1 वी. मि., p. 446 ff.

नश्यन्ति चेतयः सर्वाः प्रजानां नन्दने चिरम् ।
नाऽकाले म्रियते राजा पुत्रपौत्रैश्च वर्द्धते ॥
देवा भवन्ति सुप्रीतास्तथा वै मातरस्तथा ।
गोलोकं च लभेद्वत्स सर्वान् कामानवाप्नुयात् ॥
'ईतयः' प्रसिद्धाः ।

यथा

अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः[1] ॥

इति गवोत्सर्गः ॥

1 Comment and definition reproduced by वी. मि., p. 447.

## २१

# अथ वसोर्धारा

तत्र भविष्यपुराणे[1]

अगस्त्य उवाच—

वसोर्धारास्थिता देवी सर्वकामप्रदायिका ।
तथा ते कथयिष्यामि शृणु पुण्यविवृद्धये ॥
सर्वेषामेव देवानां कथितेयं मयोत्तमा ।
विशेषेण तु वह्निस्था आयुरारोग्यदा मता ॥
विजयं भूमिलाभं च मानवानां प्रियं तथा ।
विद्यासौभाग्यपुत्रादि कुण्डस्था सम्प्रयच्छति ॥
तस्मान्नृपेण भूत्यर्थं वसोर्धाराश्रिता शिवा ।
पूजनीया यथा शक्त्या सर्वकामफलप्रदा ॥
रुद्रादित्या ग्रहा विष्णुर्वयं यक्षाः सकिन्नराः ।
हुताशनमुखाः सर्वे दृष्टादृष्टफलप्रदाः ॥
गोदानं भूमिदानं च रत्नसर्पिस्तिलादि च ।
दानानि च महान्त्याहुस्तेषां धारा विशिष्यते ॥
विप्राणां कोटिकोटीनां भोजयित्वा तु यत्फलम् ।

1 These ślokas are attributed to देवीपुराण by वी. मि. p. 447 ff.

[ सद्वृत्तरतिना शान्ते एकेनाऽपि च तद्भवेत्[1] ॥
लभते तदवाप्नोति धारां दत्त्वा हुताशने ][2] ।
व्यतीपातेन सन्देहः स च सूक्ष्मः प्रकीर्त्तितः ॥
अयनं विषुवच्चैव दिनच्छिद्रं तथैव च ।
दुष्प्रापं दानहोमानां धारायां लभते नृप ॥
तस्मान्नृपेण वृद्ध्यर्थं दृष्टादृष्टजिगीषुणा ।
वसोर्धारा प्रकर्तव्या सर्वकामसुखावहा ॥
समं वा अर्द्धमर्द्धं वा ऋतुमासार्द्धवासरम् ।
कृत्वा विभवरूपेण शाश्वतं लभ्यते फलम् ॥
एकाहमपि यो देवीं कल्पयित्वा हुताशने ।
पातयेत्सर्पिषो धारां स लभेदीप्सितं फलम् ॥
देवीमातृसमीपस्थं शिवविष्णुसमीपगम् ।
भानोः प्रजापतेर्वाऽपि वसोर्धारागृहं भवेत् ॥
चिरन्तनेषु सर्वेषु स्वयं वा संस्कृतेषु च ।
पर्वतेषु च दिव्येषु नदीनां सङ्गमेषु च[3] ॥
गुहासु च विचित्रासु गृहगर्भेषु भूमिषु ।
दत्वा समीहितान् कामान् विधिना लभते नृप ॥
अथ सामान्यतो गेहं समसूत्रं जलोन्मुखम् ।
वास्तुसंशुद्धविन्यासमेकादशकरं परम् ॥

1 Udaipur Ms. corrupt : text follows I. O. and A. S. B.

2 Inserted from वी. मि., p. 448.

3 Line found only in Udaipur Ms.

त्रीणि पञ्चाऽथवा सप्त दश वा नव कारयेत् ।
विंशकं वा यदेकोनं विंशदूर्ध्वं न कारयेत् ॥
पक्वेष्टं शैलदार्वं वा सालिन्दं सहतोरणम् ।
पञ्च सप्ताऽथ नव वा गवाक्षकविभूषितम् ॥
सर्वतोभद्रविन्यस्तं क्रमवृद्ध्या विवर्द्धितम् ।
ऊर्ध्वं वै धूमनिष्काशं सप्रकाशं विशेषतः ॥
सदेवसङ्गहं कार्यमथवा दैवतैः समम्[1] ।
तस्य मध्ये भवेत्कुण्डं हस्तादिशुभलक्षणम् ॥
चतुष्कमथवा वृत्तं पङ्कजाकृति वाऽथवा ।
पृथिवीजयदं शाक्रं वृत्तं कामफलप्रदम् ॥

'शाक्रं'[2] चतुरस्रम् ।

पङ्कजे जयमारोग्यं योगदानफलप्रदम् ।
शेषाः कार्या विधानेन कुण्डाः कार्या विजानता ॥
सामान्यं सर्वहोमेषु शाक्रकुण्डं वरोत्तमम् ।
विस्तारं[3] खाततुल्यन्तु त्रिमेखलसमन्वितम् ॥
चतुस्त्रीन् द्वौ च वा कुर्यादङ्गुलान् कुण्डमानतः ।
द्विगुणं द्विगुणे कुण्डे होमानुसारेण कारयेत् ॥
एवं संसादयेद्विप्र ततः पात्रं सशृङ्खलम् ।

1 वी. मि., p. 449 : देवतागमम् , explained as तत्कालानीतदेवप्रतिमम्

2 I. O., A. S. B. and Udaipur Mss. have mixed this explanation with this s'loka below beginning with चतुस्त्रीन्

3 वी. मि., p. 449. Mss. read विस्तारं चाऽत्र तुल्यन्तु

हैमं वा राजतं वाऽपि ताम्रं वा लक्षणान्वितम् ॥
चतुर्भिः कटकैर्युक्तमयःशृङ्खलसङ्ग्रहम् ।
तस्य मध्ये भवेद्रन्ध्रं कार्यं वत्स शलाकया ॥
हेमोत्थया प्रमाणेन चतुरङ्गुलमानया ।
घृतनिष्क्रमणार्थाय कार्यं सम्यग्विपश्चिता ॥
पलैर्दशाभिरर्द्धोनैर्नाड्येकान्तु यथा व्रजेत् ।
पञ्चभिस्तु शतैर्होमः सप्तत्या च षडग्रयोः ॥
यथा पूर्णा व्रजेद्वत्स तथा कुर्यान्न चाऽन्यथा ।
हस्तमात्रं भवेद्धैमं शृङ्खलं भुजगाकृतिम् ॥
रन्ध्रे सूत्रनिबद्धं च अवलम्ब्य अधस्ततः ।
मणिं वा पङ्कजं यत्र साश्वत्थं कारयेत्तले[1] ॥
एवं कार्यास्तु रूपेण द्विगुणं त्रिगुणं च वा ।
कुर्यात्पात्रं घृतं चैव प्रतिष्ठादेवचोदितम् ॥
उद्देशं किञ्चिदत्राऽपि कथयामि नृपोत्तम ।
समायनमृतुमासपक्षाहोरात्रपूर्ववत् ॥
लग्नात्प्रसाधयेद्वत्स[2] सर्वकामप्रदा यदा ।
क्षणिकेषु च कार्येषु भक्तियुक्तः क्षणे शुभे ॥
क्षणं देवी च द्रष्टव्या यथा सर्वगता शिवा ।
तत्त्वभूता ग्रहा नागास्त्रिविधाऽपि शिवा गुणाः ॥
[ नित्यनैमित्तिके होमे मन्त्रयोगेन दापयेत्[3] ।

1 वी. मि., p. 450 , मणिं वा पङ्कजम्पात्रमाबद्धं कारयेत्तले

2 वी. मि., p. 450 , लग्नाधिशोधयेत्

3 I. O. omits these two ślokas.

यो यस्य भक्तिमासक्तः तस्य कुर्यात्सुसन्निधिम् ॥
सङ्ग्रहांल्लोकपालांश्च मातरो भुजगाञ्छिवान् ।
कल्पयेत्सर्वहोमेषु देवी एतेषु संस्थिता ॥ ]
स्थूलरूपा तु सा सर्वा तुष्टा देवी महाफला ।
कालादिबलिगन्धादिप्रतिष्ठां वत्स कारयेत् ॥
यथा सम्पत्तिसम्पन्नः सर्वकालं प्रदापयेत् ।
तदा मातृग्रहान् भूतांल्लोकपालान्निवेशयेत् ॥
हेमराजतताम्रान्वा स्वनिवेशोपलक्षितान् ।
वर्णपुष्पबलिं गन्धं दक्षिणादि यथाक्रमम् ॥
मातॄणां लोकपालानां ग्रहाणां च यथाविधि ।
हृदयेन प्रदेयं च मूलमन्त्रैः पुरातनैः ॥
अथवा सर्वसामान्यान् वैदिकानपि कारयेत् ।
अथर्वविधिना मन्त्रान् पूर्वोक्तान्वा यथा पुरा ॥
प्रभूतमन्नं नैवेद्यैर्भूरिदक्षिणसंयुतैः ।
कुर्यान्महाप्रयत्नेन[1] नाऽन्यथा तु कदाचन ॥
छेदे भयं विजानीयात्तदर्थं तत्र कारयेत् ।
महाव्याहृतिहोमेन यत्र तत्र निवेशयेत् ॥
मूलमन्त्रेण देव्यास्तु शृङ्खलं हृदयेन तु ।
घृतं शिरसो मन्त्रेण शिखया वाऽनुतापयेत् ॥
कवचेन तथा वह्निं रक्षयित्वा प्रदापयेत् ।
अस्त्रेण नेत्रमन्त्रेण[2] सर्वं सर्वत्र निक्षिपेत् ॥

1 Lacunae here in I. O.

2 Udaipur Ms. reads नेत्रमार्गेण

लोकपालान् ग्रहान्नागान् द्वादशार्द्धेन पूजयेत्।
शिवाद्यान् सनकाद्यांश्च देवाद्यानपि पूजयेत् ॥
नित्येषु च महाप्राज्ञ नैमित्तिकविशेषतः।
पञ्चकानि च सप्तानि नवकानि क्रियादिकैः ॥
अग्नेर्वर्णश्च गन्धश्च शब्दश्चाऽऽकृतयस्तथा।
विकाराश्च तदा वत्स बोद्धव्याः सिद्ध्यसिद्धिदाः ॥
तदन्ते वत्स सत्कार्या सर्वकामप्रदायिका।
येन सान्निध्यमायाति सर्वहोमेषु मङ्गला ॥
"सहस्रार्चिर्महातेजो नमस्ते बहुरूपिणे।
नमस्ते नीलकण्ठाय पीतवासाय पावक ॥
स्रुवमेखलहस्ताय ब्रह्माण्डदहने नमः।
सर्वाशिने सर्वगते पावकाय नमो नमः ॥
दुर्गाय उग्ररूपाय स्त्रीलिङ्गाय स्वतेजसे[1]।
वसु अश्विनिरूपाय सर्वाहाराय वै नमः ॥
त्वं रुद्र घोरकर्मासि घोरहा परमेश्वर।
विष्णुस्त्वं जगतां पालो ब्रह्मा सृष्टिकरः स्मृतः ॥
त्वं च सर्वात्मको देव लोकपालतनुस्थितः।
इन्द्राय वह्नये देव यमाय पिशिताशिने ॥
वरुणानिलसोमाय ईशदेवाय वै नमः।
सूर्याय चन्द्ररूपाय भूसुताय बुधाय च ॥
बृहस्पतये शुक्राय सौरराह्वोश्च केतवे।

1 वी. मि., p. 482 reads उग्राय

सर्वगग्रहरूपाय व्यालमातररूपिणे ॥
वृष्टिः सृष्टिः स्थितिः [ भूतिः ] कर्त्रे च वरदाय च ।
नमस्ते स्कन्दमातस्ते स्कन्दपित्रे नमो नमः" ॥
कुण्डे वा मण्डले वाऽपि स्थण्डिले वाऽथ वा विभो ! ॥
महानसे वा[1]त्वां देव हुत्वा चेष्टं लभेन्नरः ॥
घृतं क्षीरं रसं धान्यं तिलान्व्रीहीन् कुशान् यवान् ।
भावादभावतो वाऽपि सततं होमयेत्तु यः ॥
एवं वित्तविहीनोऽपि नरो विगतकिल्बिषः ।
किं पुनर्नित्यहोमे तु वसोर्द्धारा हुताशने ॥
सर्वमङ्गलमन्त्रेण आहुतिं सम्प्रदापयेत् ।
लोकपालगृहाणां तु ओंकारेण नमोन्तकैः ॥
स्वैः स्वैर्मन्त्रैरशेषाणां होमः कार्यो नृपोत्तम ।
अन्नं चित्रं विशुद्धं च संस्कृतं घृतपायसैः ॥
होमयेद्विधिवद्विप्रो बलिं वाऽपि प्रदापयेत् ।
सितवस्त्रधरो भूपः सबलः सहवाहनः ॥
पूजयेच्छत्ररत्नादीन् मातरं पितरं द्विजान् ।
आचार्यान्बान्धवांल्लोकान्सर्वाश्रमरताश्च ये ॥
नटनर्तकवेश्याश्च कन्यकाविधवास्त्रियः ।
दीनान्धकृपणांश्चैव अन्नदानेन पूजयेत् ॥
एवं निवेशनं कृत्वा नित्यं जप्यं शतं शतम् ।

1 वी. मि., p. 452 reads : महानसे वा भ्राष्ट्रे वा

प्रातर्मध्याह्नसन्ध्यायां तत्र शान्तिः प्रकीर्तिता ॥
भवते नृपराष्ट्रस्य पूर्वोक्तफलदायकम् ॥

( इति वसोर्द्धारानिवेशनविधिः )

[ तत्रैवोक्तम् ]

ब्रह्मोवाच

तप्तहाटकवर्णाभः सूर्यसिन्दूरकान्तिभृत्[1] ।
शङ्खकुन्देन्दुपद्माभो घृतक्षीरनिभः शुभः ॥
जयाभोऽशोकपुष्पाभो लाक्षाजलजसन्निभः ।
शुभदः सर्वकार्याणां विपरीतो ह्यसिद्धिदः ॥
मेघदुन्दुभिशङ्खानां [ [2]वेणुवीणास्वनः शुभः ।
वृषभशिखिकाकानां ] कोकिलस्वनपूजितः ॥
कुङ्कुमागुरुकर्पूरमदरोचनगन्धवान् ।
मांस्येलाकुष्टतगरसितगन्धी च पूजितः ॥
हंसच्छत्रे( भगो )कुम्भपद्माकृतिकरः शुभः ।
सिंहबर्हिणशैलानां चामराकृतिरिष्टदः ॥
सधूमोऽमृतगन्धी च शुकषट्चरणोपमः[3] ।
छिन्नज्वालोऽथवा रोदी नेष्टः सर्वेषु पावकः ॥

1 वी. मि., p. 453 ff. Udaipur Ms. reads वर्णभृत्

2 Lacunae in both I. O. and A. S. B. between the brackets.

3 So, I. O.; A. S. B. and वी. मि., p. 453 read शुकास्यचरणोपमः

सुसंहतशिखः शस्त उर्ध्वं प्रज्वलितोऽपि वा ।
लेलिहानः शुभः कुण्डे दीप्तिमान् वरदोऽनलः ॥
एवंविधः सदैवाऽथ यज्ञे वैश्वानरो हितः ।
यात्रायां शक्रकेतौ च सर्वकार्येषु सिद्धिदः ॥
न्यूना या वहते धारा मानात्सर्पिर्न सा शुभा ।
नाऽधिका शस्यते विप्र दुर्भिक्षकलिकारिका ॥
त्रुट्यते वहमाना या शाम्यते वा हुताशनः ।
साऽपि चाऽन्यं नृपन्त्विच्छेद्या च धारा पतेद्बहिः ॥
वज्रा नदी[1] महारूपा मनोज्ञा क्रियकारिका ।
सुवर्णा हेमवर्णा च धारा राज्यविवृद्धये ॥
सन्तता पतते या च तनोतीव च पावकम् ।
तनोति स नृपं राष्ट्रं वसोर्धारा न संशयः ॥
सुगन्धिस्वस्थविमलकृमिकीटविवर्जितम् ।
शस्यते वसुधारायां सर्पिर्गव्यं च पूजितम्[2] ॥
अभावाद्गन्धमाज्यं वा होतव्यं च सुशोभनम् ।
घृतक्षौद्रपयोधारा सर्वपीडानिवारिणी ॥
गुडूचिशकलैर्होमः सहकारदलैः शुभः ।
अश्वत्थमालतीदूर्वा आयुरारोग्यपुत्रदा ॥
सौभाग्यं च श्रियं देवी प्रयच्छत्यविचारणा ।
आच्छाद्य वा शुभा वत्स सफलाः सर्वकामिकाः ॥
होतव्याः सर्वकालं तु सातत्यात्समिधो नृप ।

1 वी. मि., p. 454 ऋजुनादा for वज्रा नदी

2 Line omitted by Udaipur Ms.

सर्वकालं घृतं प्रोक्तं निमित्ते च निमित्ततः ॥
विशुद्धसर्पिषो यानि तानि चाऽत्र विचारयेत् ।
ज्वालावशं शुभं गन्धं सर्वहोमेषु लक्षयेत् ॥
संयतैः संयताहारैः सर्वशास्त्रार्थपारगैः ।
जपहोमरतैर्भूप धारा देया तु तद्विधैः ॥
पाषण्डविकलांल्लुब्धान् धर्मापेतान् बहिष्कृतान् ।
सर्वकालप्रवादांश्च न वदेन्नाऽवलोकयेत् ॥
मृत्युञ्जयं[1] तथा मन्त्रं चतुर्थ्यन्तं जपेत्तदा ।
भाग्यवान्नित्यहोमे तु अन्यथा विफलं भवेत् ॥
सामान्या या भवेद्धारा तत्र जप्यं शतं शतम् ।
प्रातर्मध्याह्नसन्ध्यासु सर्वकामसमृद्धये ॥
वसुर्द्रव्यं घृतं वाऽऽज्यममृतं हविष्कामिकम् ।
तत्र धारा सदा देया वसोर्धारा हि सा मता ॥
वसुनाऽपत्यकामेन दक्षेण च महात्मना ।
मया च विष्णुना शक्र रुद्रेण च सहोमया ॥
आत्मानं च स्वरूपेण धारायान्तु प्रपानितम् ।
देवी सान्निध्यमायाता सर्वकामप्रदायिका ॥
तस्मात् त्वमपि राजेन्द्र वसोर्द्धारां प्रदापय ।
नातः परतरं पुण्यं विद्यते नृपसत्तम ॥
वसोर्धाराप्रदानस्य एकाहमपि यद्भवेत ।
नृपेण पुष्टिकामेन परराज्यजिगीषुणा ॥

1 'त्र्यम्बकं यजामहे' ( V, 4, 30 ) इति ऋक्संहितोक्तो मृत्युञ्जयमन्त्रो-ऽत्र सूच्यते ।

देया धारा सदा वत्स रिपुनाशाय विद्धि ताम् ।
विच्छेदो नित्यहोमस्य न कार्यस्तु कदाचन ॥

महादोषमवाप्नोति यः कुर्याद्विमुखान् सुरान् ।
द्रव्याभावे घृताभावे नृपतस्करजे भये ॥

यदि नो वहते धारा तदा छिद्रं न विद्यते[1] ।
होमं कृत्वा क्षमापेत देवदेवीं नृपोत्तम ॥

पुनः प्राप्ते भवेद्वत्स प्रतिष्ठा विधिचोदिता ।
महत्याश्विनमासे तु अष्टमीनवमीषु च ॥

कार्तिक्यां माघचैत्रे तु चित्रायां रोहिणीषु च ।
वैशाख्यां तु प्रदातव्या ज्येष्ठा ज्येष्ठस्य सत्तम ॥

आषाढे द्वादशी चोक्ता अष्टमी पूर्णिमा नभे ।
नभस्ये रोहिणी वत्स चतुर्थ्यां भौमवासरे ॥

सङ्क्रान्तिषु च सर्वासु गुरुसौरभवासु च ।
चन्द्रसूर्योपरागेषु प्रतिष्ठायज्ञकर्मणि ॥

पुत्रोत्सवे प्रदातव्या जन्मपुष्पाभिषेचने ।
मार्गे व्रतनिबन्धे तु सुघोरे केतुदर्शने[2] ॥

ग्रहकृत्योपशमने धारा देया शुभावहा ।
एवं यो वाहयेद्धारां शास्त्रदृष्टेन कर्मणा ॥

तस्य भूः सिद्ध्यते सर्वा सनगा सहसागरा ।
अश्वमेधसमं पुण्यं दिनहोमात्प्रजायते ॥

1 I. O. and A. S. B. as well as वी. मि., p. 455 read न विद्यते for च विद्यते in Udaipur Ms.

2 केतु i. e. धूमकेतु

वाजपेयशतं रात्रावग्निष्टोमशतं तथा ।
आधयो व्याधयस्तस्य न भवन्ति कदाचन ॥
आयुरारोग्यमैश्वर्यं तदन्ते च सुखी भवेत् ॥

इति वसोर्धाराविधिः ॥

इति श्रीमद्गोविन्दचन्द्रमहाराजसन्धिविग्रहिक-
श्रीलक्ष्मीधरभट्टविरचिते कृत्यकल्पतरौ
राजधर्मकाण्डं सम्पूर्णम् ॥

॥ शुभमस्तु[1] ॥

1 A. S. B., संवत् १७६२ मिति आश्विनवदि अष्टमी चन्द्रवासरे ।

# APPENDIX A

## Vedic Mantras cited

पृ. १०, ऋताषाडिति त्रयोदश राष्ट्रभृन्मन्त्राः—'ऋताषाड् ऋतधामाग्निर्गन्धर्वः'—वाज. सं., १८, ३८; तैत्तिरीय. सं., ३, ४, ७, १; मै. सं., २, १२, २; काठक. सं., १८, १४; शतपथब्रा., ९, ४, १, ७.

पृ. १०, 'गणः'–ईदृगन्या गृहे—(?)

पृ. १०, 'अप्रतिरथः'—'आशुः शिशान'—'आशुश्शिशानो वृषभो न युध्मः'—तै. सं., ४, ६, ४, १; मै. सं., २, १०, ४; काठ. सं., १८, ५; आशुश्शिशानो वृषभो न भीमः, ऋ. सं., १०, १०३, १. अथ. सं., १९, १३, १.

पृ. १०, 'सत्यगणः'—'आगात् सत्यम्'—'आगात्सत्यं हविरिदम् जुषाणम्'—तै. ब्रा., ३, १२, ३, २.

पृ. १०, 'धर्मगणः'—'यास्ते अग्ने घोरास्तनुवः'—'यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ'—तै. ब्रा., १, १, ७, ३ ; 'यास्ते अग्ने घोरास्तनुवः क्षुच्च तृष्णा चास्नुक् चानाहुतिश्चाशनया च पिपासा च सेदिश्चामतिश्चैतास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः'—तै. आर., ४, २२, १.

पृ. १०, 'अभयः'—'यत इन्द्र'—'यत इन्द्र भयामहे ततो नो अभयं कृधि'—तै. ब्रा., १५, ४, ३; तै. आर., १०, १, ९; ऋ. सं., ८, ६१, १३; अथ. सं., १९, १५, १; साम. सं., १, २७४; पं. ब्रा., १५, ४, ३.

पृ. १०, 'स्वस्त्ययनम्'—'स्वस्तिदा विशस्पतिः'—ऋ. सं., १०, १५२, २; अथ. सं., १, २१, १; ८, ५, २२; षड्वि. ब्रा., ५, १; तै. ब्रा., ३, ७, ११, ४; तै. आ., १०, १, ९; महानारायणोपनिषद् , २०, ५.

पृ. ४९, 'स्वप्नमाणवकं'—'यज्जाग्रत'—( 'शिवसङ्कल्पं' ) 'यज्जाग्रतो दूरं उदैति दैवम्'—वा. सं., ३४, १.

